(वा०) निमित्त-पर्याय-प्रयोगे सर्वासां प्रायदर्शनम्
२८ अपादाने **पञ्चमी** ३५
२९ अन्यारादितरर्ते-दिक्छब्दाञ्चूत्तर-पदाजाहि-युक्ते
३० षष्ठ्यतसर्थप्रत्ययेन
३१ एनपा **द्वितीया** ३२
३२ पृथक्-विना-नानाभिस्**तृतीया**ऽ-न्यतरस्याम् ३५,३३
३३ करणे च स्तोकाल्प-कृच्छ्र-कति-पयस्यासत्त्ववचनस्य
३४ दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्
३५ **दूरान्तिकार्थेभ्यो** द्वितीया च ३६
३६ **सप्तम्यधिकरणे** च ४५
३७ **यस्य च भावेन भाव-लक्षणम्** ३८
३८ **षष्ठी** चानादरे ४१
३९ स्वामीश्वराधिपति-दायाद-साक्षि-प्रतिभू-प्रसूतैश्च
४० आयुक्त-कुशलाभ्यां चासेवायाम्
४१ **यतश्च निर्धारणम्** ४२
४२ पञ्चमी विभक्ते
४३ साधु-निपुणाभ्यामर्चायां **सप्तम्य**प्रतेः ४५
४४ प्रसितोत्सुकाभ्यां **तृतीया** च ४५
४५ नक्षत्रे च लुपि
४६ प्रातिपदिकार्थ-लिङ्ग-परिमाण-वचनमात्रे **प्रथमा** ४९
४७ **सम्बोधने च** ४९
४८ सामन्त्रितम्
४९ एकवचनं संबुद्धिः
५० **षष्ठी शेषे** ७३,६६
५१ ज्ञोऽविदर्थस्य करणे
५२ अधीगर्थ-दयेशां **कर्मणि** ६१
५३ कृञः प्रतियत्ने
५४ रुजार्थानां भाव-वचनानामज्वरेः
५५ आशिषि नाथः
५६ जासि-निप्रहण-नाट-क्राथ-पिषां हिंसायाम्
५७ **व्यवहृ-पणोः** समर्थयोः ५८
५८ **दिवस्तदर्थस्य** ६०

---

२९ अन्य इत्यर्थग्रहणमितरग्रहणं प्रपञ्चार्थम् । दिशि दृष्टः शब्दो दिक्शब्दस्तेन देशकालवृत्तिनापि योगे भवति ।

४१ जाति-गुण-क्रिया-संज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम् ।

४६ नियतोपस्थितिकः प्रातिपदिकार्थः । यस्मिन्प्रातिपदिक उच्चारिते यस्यार्थस्य नियमेन भानं जायते स इत्यर्थः । मात्रशब्दस्य प्रत्येकं योगः । अलिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थमात्रे इत्यस्योदाहरणम् ।

५० उक्तादन्यः शेषः । उक्तस्तु प्रातिपदिकार्थः कर्मादिकारकार्थः । तदन्यः स्वस्वामिभावादिसम्बन्धस्तत्र षष्ठीत्यर्थः ।

५७ समस्तुल्योऽर्थो ययोस्तयोरित्यर्थः । शकन्ध्वादित्वात् पररूपम् । द्यूते क्रय-विक्रयव्यवहारे चानयोस्तुल्यार्थता ।

५९ विभाषोपसर्गे
६० द्वितीया ब्राह्मणे
६१ प्रेष्यब्रुवोर्हविषो देवता-संप्रदाने
६२ चतुर्थ्यर्थे बहुलं छन्दसि ६३
६३ यजेश्च करणे
६४ कृत्वोऽर्थ-प्रयोगे कालेऽधिकरणे
६५ कर्तृ-कर्मणोः कृति
६६ उभय-प्राप्तौ कर्मणि
६७ क्तस्य च वर्तमाने ६८
६८ अधिकरणवाचिनश्च
६९ न लोकाव्यय-निष्ठा-खलर्थ-तृनाम् ७०
(वा०) कमेरनिषेधः ।
७० अकेनोर्भविष्यदाधमर्ण्ययोः
७१ कृत्यानां कर्तरि वा
७२ तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्
७३ चतुर्थी चाशिष्यायुष्य-मद्र-भद्र-कुशल-सुखार्थ-हितैः

[1] अनभिहित [2] इत्थंभूत० [3] यतश्च०
प्रेष्यैर्ब्रुवोस्त्रयोदश ।

इति पाणिनीयसूत्रपाठे द्वितीयाध्यायस्य तृतीयः पादः ।

## चतुर्थः पादः

१ द्विगुरेकवचनम् १७
२ द्वन्द्वश्च प्राणि-तूर्य-सेनाङ्गानाम् १६
३ अनुवादे चरणानाम्
४ अध्वर्युक्रतुरनपुंसकम्
५ अध्ययनतोऽविप्रकृष्टाख्यानाम्
६ जातिरप्राणिनाम्
७ विशिष्ट-लिङ्गो नदी-देशोऽग्रामाः
८ क्षुद्र-जन्तवः
९ येषां च विरोधः शाश्वतिकः
१० शूद्राणामनिरवसितानाम्
११ गवाश्व-प्रभृतीनि च
१२ विभाषा वृक्ष-मृग-तृण-धान्य-व्यञ्जन-पशु-शकुन्यश्व-वडव-पूर्वा-पराधरोत्तराणाम् १३
१३ विप्रतिषिद्धं चानधिकरणवाचि
१४ न दधि-पय-आदीनि १५
१५ अधिकरणैतावत्त्वे च १६
१६ विभाषा समीपे
१७ स नपुंसकम् ( द्विगुर्द्वन्द्वः ) २५
(वा०) सामान्ये नपुंसकम्

---

६९ ल + उ + उक + अव्ययम् इति च्छेदः । ल इति लादेशाः शतृ-शानचौ कानच्-क्वसू कि-किनौ च गृह्यन्ते । तृन्निति प्रत्याहारः शतृ-शानचाविति तृशब्दादारभ्य आतृनो नकारात् ।

१ एकस्यार्थस्य वचनं वाचको भवतीत्यर्थः । समाहारद्विगोश्चेदं ग्रहणं भवति ।

७ विभिन्नलिङ्ग इत्यर्थः ।

१२ बहुप्रकृतिकस्येदम् । द्विप्रकृतिकस्य तु बदरामलके, रथिकाश्वारोहौ ।

१७ परलिङ्गतापवादोऽयम् । अकारान्तो वा स्त्रियाम् । पात्राद्यन्तं नपुंसकम् ।

१८ अव्ययीभावश्च
(वा०)पथश्च संख्याव्ययादेः क्रियाविशेष-
णानां द्वितीयैकवचनं नपुंसकम् ।
१९ तत्पुरुषोऽनञ्-कर्मधारयः २५
२० संज्ञायां कन्थोशीनरेषु ( १ )
२१ उपज्ञोपक्रमं तदाद्याचिख्यासायाम्
२२ छाया बाहुल्ये
२३ सभा राजाऽमनुष्य-पूर्वा २४
२४ अशाला च
२५ विभाषा सेना-सुरा-च्छाया-शाला-
निशानाम्
२६ परवल्लिङ्गं द्वन्द्व-तत्पुरुषयोः
२७ पूर्ववदश्व-वडवौ २८
२८ हेमन्त-शिशिरावहो-रात्रे च च्छन्दसि
२९ रात्राह्नाहाः पुंसि
(वा०) संख्यापूर्वं रात्रं क्लीवम्
३० अपथं नपुंसकम् ३१
३१ अर्धर्चाः पुंसि च
३२ इदमोऽन्वादेशेऽशनुदात्तस्तृती-
यादौ ३४, ३३
३३ एतदस्त्र-तसोस्त्र-तसौ
चानुदात्तौ ३४
३४ द्वितीया-टौस्स्वेनः
३५ आर्धधातुके ५७
३६ अदो जग्धिर्ल्यप्ति-किति ४०
३७ लुङ्-सनोर्घस्लृ ४०
३८ घञपोश्च
३९ बहुलं छन्दसि
४० लिट्यन्यतरस्याम् ( २ ) ४१
४१ वेञो वयिः
४२ हनो वध लिङि ४४
४३ लुङि च ४४
४४ आत्मनेपदेष्वन्यतरस्याम्
४५ इणो गा लुङि ४७
४६ णौ गमिरबोधने ४८,४७
४७ सनि च ४८
४८ इङश्च ५१
४९ गाङ् लिटि ५१
५० विभाषा लुङ्-लृङोः ५१
५१ णौ च सँश्चङोः
५२ अस्तेर्भूः
५३ ब्रुवो वचिः
५४ चक्षिङः ख्याञ् ५५
५५ वा लिटि
५६ अजेर्व्यघञपोः ५७
५७ वा यौ
५८ ण्य-क्षत्रिया-ऽऽर्ष-ञितो यूनि
लुगणिञोः
५९ पैलादिभ्यश्च ६१,८४
६० इञः प्राचाम् ( ३ )
६१ न तौल्वलिभ्यः
६२ तद्राजस्य बहुषु तेनैवास्त्रि-
याम् ७०
६३ यस्कादिभ्यो गोत्रे ७०

---

१८ अनुक्तसमुच्चयार्थश्चकारः ।
४२ वध इति सुलुक् पदम् ।
५६ अजेः वी + अनप् + अप् इति च्छेदः ।

६४ यञञोश्च
६५ अत्रि-भृगु-कुत्स-वसिष्ठ-गोतमाङ्गिरोभ्यश्च
६६ बह्वच इञः प्राच्य-भरतेषु
६७ न गोपवनादिभ्यः
६८ तिक-कितवादिभ्यो द्वन्द्वे
६९ उपकादिभ्योऽन्यतरस्यामद्वन्द्वे
७० आगस्त्य-कौण्डिन्ययोरगस्ति-कुण्डिनच्
७१ सुपो धातु-प्रातिपदिकयोः
७२ **अदि-प्रभृतिभ्यः शपः** ७३, ७६
७३ बहुलं छन्दसि
७४ यङोऽचि च
७५ जुहोत्यादिभ्यः **श्लुः** ७६
७६ बहुलं छन्दसि
७७ गाति-स्था-घु-पा-भूभ्यः **सिचः परस्मैपदेषु** ७९-७८
(वा०) गा-पोर्ग्रहणे इण्पिबत्योर्ग्रहणम्
७८ **विभाषा** घ्रा-धेट्-शाच्छासः ७९
७९ तनादिभ्यस्त-थासोः
८० मन्त्रे घस-ह्वर-णश-वृह-दहाद्-वृच्-कृ-गमि-जनिभ्यो लेः (४) ८१
८१ आमः
८२ अव्ययादाप्सुपः ८४
८३ **नाव्ययीभावादतोऽम्त्व-पञ्चम्याः** ८४
८४ तृतीया-सप्तम्योर्बहुलम्
८५ लुटः प्रथमस्य डा-रौ-रसः
[1]द्विगुरु[2]पञ्जोपक्रमं[3]वेञो वयिर्न[4]तौल्वलिभ्य [5]आमः पञ्च ।

**इति पाणिनीयसूत्रपाठे द्वितीयाध्यायस्य चतुर्थः पादः ।**



८० लेः इति निरनुबन्धग्रहणात् च्लि, लिट्, लिङ्—सर्वं ग्राह्यम् ।

# अथ तृतीयोऽध्यायः

## प्रथमः पादः

१ **प्रत्ययः** ५।४।१६०
२ **परश्च** ,, ,,
३ **आद्युदात्तश्च** ,, ,,
४ अनुदात्तौ सुप्-पितौ
५ गुप्-तिज्-किद्भ्यः **सन्** ७
६ मान्-वध-दान्-शान्भ्यो दीर्घश्चाभ्यासस्य
७ धातोः **कर्मणः समानकर्तृकादिच्छायां वा** १०,९,२२
(वा०) शैषिकान्मतुवर्थीयाच्छैषिको मतुवर्थिकः । सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥
८ **सुप आत्मनः क्यच्** ११,९,१०
९ काम्यच्च
१० **उपमानादाचारे** ११
(वा०) अधिकरणाच्चेति वक्तव्यम्
११ कर्तुः **क्यङ्** सलोपश्च १८
(वा०) सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः
१२ भृशादिभ्यो **भुव्यच्वेर्लोपश्च** हलः १३
१३ लोहितादि-डाज्भ्यः क्यष्
१४ कष्टाय क्रमणे
१५ **कर्मणो** रोमन्थ-तपोभ्यां वर्ति-चरोः २
१६ वाष्पोष्मभ्यामुद्वमने
१७ शब्द-वैर-कलहाभ्र-कण्व-मेघेभ्यः **करणे** २
१८ सुखादिभ्यः कर्तृ-वेदनायाम्
१९ नमो-वरिवश्चित्रङः क्यच्
२० पुच्छ-भाण्ड-चीवराण्णिङ् (१
२१ मुण्ड-मिश्र-श्लक्ष्ण-लवण-व्रत-व[स्त्र]-हल-कल-कृत-तूस्तेभ्यो णिच्
२२ **धातो**रेकाचो हलादेः क्रिया-सम[भि]भिहारे **यङ्** ९०, २
२३ **नित्यं** कौटिल्ये गतौ २
२४ लुप-सद-चर-जप-जभ-दह-दश-गृभ्यो भावगर्हायाम्
२५ सत्याप-पाश-रूप-वीणा-तूल-श्लो[क]-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो **णिच्** २
(वा०) अर्थ-वेदयोरप्यापुग् वक्तव्यः
२६ हेतुमति च
(वा०) आख्यानात्कृतस्तदाचष्टे, इ[ति]

---

१ धातुप्रत्यया अध्यायेऽत्र ।
५ अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति ।
७ उपस्थितत्वादिषिकर्मण इषिणा समानकर्तृकाद्धातोरिति योज्यम् ।
१८ वेदनाकर्तुरेव चेत्सुखादीनि स्युः ।

णिच्, कृल्लुक्, प्रकृतिप्रत्यापत्तिः, प्रकृतिवच्च कारकम्
२७ कण्ड्वादिभ्यो यक्
२८ गुपू-धूप-विच्छि-पणि-पनिभ्य आयः
२९ ऋतेरीयङ्
३० कमेर्णिङ्
३१ आयादय आर्धधातुके वा
३२ सनाद्यन्ता धातवः
३३ स्य-तासी लृ-लुटोः
३४ सिब्बहुलं लेटि
(वा०) सिब्बहुलं छन्दसि णिद्वक्तव्यः
३५ कास्-प्रत्ययादाममन्त्रे **लिटि** ४२, ३९
(वा०) कास्यनेकाज्-ग्रहणं कर्तव्यम्
३६ इजादेश्च गुरुमतोऽनृच्छः
३७ दयायासश्च
३८ उष-विद-जागृभ्योऽन्य-**तरस्याम्** ३९
३९ भी-ह्री-भृ-हुवां श्लुवच्च
४० कृञ्चानुप्रयुज्यते लिटि (२)
४१ विदांकुर्वन्त्वित्यन्यतरस्याम् ४२
४२ अभ्युत्सादयां-प्रजनयां-चिकयां-रमयामकः पावयांक्रियाद् विदामक्रन्निति च्छन्दसि
४३ च्लि लुङि ६६
४४ च्लेः सिच् ६६
४५ शल इगुपधादनिटः **क्सः** ४७
४६ श्लिष आलिङ्गने
४७ न दृशः
४८ णि-श्रि-द्रु-स्रुभ्यः कर्तरि **चङ्** ५१
(वा०) कमेश्च्लेश्चङ् वक्तव्यः
४९ **विभाषा** धेट्-श्व्योः ५०
५० गुपेश्छन्दसि ५१
५१ नोनयति-ध्वनयत्येलयत्यर्दयतिभ्यः
५२ अस्यति-वक्ति-ख्यातिभ्योऽङ् ५९
५३ **लिपि-सिचि-ह्वश्च** ५४
५४ आत्मनेपदेष्वन्यतरस्याम्
५५ पुषादि-द्युताद्य्लृदितः **परस्मैपदेषु** ५८
५६ सर्ति-शास्त्यर्तिभ्यश्च
५७ इरितो **वा** ५८

---

२६ हेतुर्विद्यते यस्यासौ हेतुमान् प्रयोजकव्यापारस्तस्मिन्प्रेषणादौ वाच्य इत्यर्थः।
३२ सन्-क्यच्-काम्यच्-क्यङ्-क्यषोऽथाचारक्विब्-णिज्यङौ तथा।
यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः॥
३५ आमोऽमित्त्वमदन्तत्वादगुणत्वं विदेस्तथा।
आस्-कासोराम्विधानाच्च पररूपं कतन्तवत्॥
४० 'कृञ्' इति 'कृभ्वस्तियोगे० ५।४।५०' इति-सूत्रस्थकृभ्वस्तीनामुपलक्षणम्। भुवोऽनुविधानान्नासेर्भूरादेश आर्द्धधातुके। 'आमः २।४।८१' इति लिटो लुकि पुनर्लिङ्विधानार्थम् 'लिटि' इत्यनुवर्तमानेऽपि पुनः 'लिटि' इति।
५३ आत्मनेपदार्थं पृथक् पाठः।

५८ जॄ-स्तम्भु-म्रुचु-म्लुचु-ग्रुचु-ग्लुचु-ग्लुञ्चु-श्विभ्यश्च
५९ कृ-मृ-दृ-रुहिभ्यश्छन्दसि
६० चिण् ते पदः ६५।६६ (३)
६१ दीप-जन-बुध-पूरि-तायि-प्यायिभ्योऽन्यतरस्याम् ६३
६२ अचः कर्म-कर्तरि ६५
६३ दुहश्च
६४ न रुधः ६५
६५ तपोऽनुतापे च
६६ चिण् भावकर्मणोः ६७
६७ सार्वधातुके यक् ८२
६८ कर्तरि शप् ८८
६९ दिवादिभ्यः श्यन् ७२
७० वा भ्राश-भ्लाश-भ्रमु-क्रमु-क्लमु-त्रसि-त्रुटि-लषः ७२
७१ यसोऽनुपसर्गात्
७२ सं-यसश्च
७३ स्वादिभ्यः श्नुः ७६
७४ श्रुवः शृ च
७५ अक्षोऽन्यतरस्याम् ७६
७६ तनूकरणे तक्षः
७७ तुदादिभ्यः शः
७८ रुधादिभ्यः श्नम्
७९ तनादिकृञ्भ्य उः ८
८० धिन्वि-कृण्व्योर च (४
८१ क्र्यादिभ्यः श्ना ८
८२ स्तन्भु-स्तुन्भु-स्कन्भु-स्कुन्भु-स्कुञ्भ्यः श्नुश्च
८३ हलः श्नः शानज्झौ ८
८४ छन्दसि शायजपि ८
८५ व्यत्ययो बहुलम्
८६ लिङ्याशिष्यङ्
८७ कर्मवत्कर्मणा तुल्यक्रियः ९
८८ तपस्तपःकर्मकस्यैव
८९ न दुह-स्नु-नमां यक्चिणौ
९० कुषि-रञ्जोः प्राचां श्यन् परस्मैपदं च
९१ धातोः ३।४।११७
९२ तत्रोपपदं सप्तमीस्थम् ९४
९३ कृदतिङ् ३।४।७७
९४ वाऽसरूपोऽस्त्रियाम्

---

६६ 'चिण्' इत्यनुवर्तमाने निषेधव्यवधाने पुनश्चिण् स्पष्टार्थम् ।
७८ श्नमः छटा भट्टिकाव्य-शास्त्रे षष्ठ-सर्गे पञ्चत्रिंशपद्यतः दृशेलिमा ।
८० अन्त्यस्येत्यर्थः ।

८५ सुप्-तिङुपग्रह-लिङ्ग-नराणां काल-हलच्-स्वर-कर्तृ-यङां च ।
व्यत्ययमिच्छति सूत्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन ॥
८७ 'कर्मणा' इत्यत्र कर्म-शब्देन कर्मस्थ-क्रिया लक्ष्यते । ततश्च कर्मणा कर्मस्थ-क्रियया तुल्यक्रियः कर्ता कर्मवद् भवति । अर्थात् कर्मकर्ताऽपि कर्माश्रयाणि कार्याणि यक्-चिणाद्यात्मनेपदादीनि प्रति-पद्यत इत्यर्थः ।

९५ **कृत्याः** ( प्राङ् ण्वुलः ) १३३
९६ तव्यत्तव्यानीयरः
(वा०) वसेस्तव्यत्कर्त्तरि णिच्च
९७ अचो **यत्** १०६
(वा०) तकि-शसि-चति-यति-जनिभ्यो यद्वाच्यः
(वा०) हनो वा तद्वधश्चेति वक्तव्यम्
९८ पोरदुपधात्
९९ शकि-सहोश्च ( ५ )
१०० गद-मद-चर-यमश्चा**नुपसर्गे** १०८
( वा० ) चरेराङि चागुरौ सुक् च वा, आश्चर्यम् आचर्यम्
१०१ अवद्य-पण्य-वर्या गर्ह्य-पणितव्या-निरोधेषु
१०२ वह्यं करणम्
१०३ अर्यः स्वामि-वैश्ययोः
१०४ उपसर्या काल्या प्रजने
१०५ अजर्यं सङ्गतम्
१०६ वदः **सुपि क्यप् च** १०८।१२१
१०७ भुवो **भावे** १०८
१०८ हनस्त च
१०९ एति-स्तु-शास्-वृ-दृ-जुषः क्यप्
११० ऋदुपधाच्चाक्लृपि-चृतेः
१११ ई च खनः
११२ भृञोऽसंज्ञायाम्
११३ मृजेर्विभाषा
११४ राजसूय-सूर्य-मृषोद्य-रुच्य-कुप्य-कृष्ट-पच्याव्यथ्याः
११५ भिद्योद्ध्यौ नदे
११६ पुष्य-सिद्ध्यौ नक्षत्रे
११७ विपूय-विनीय-जित्या मुञ्ज-कल्क-हलिषु
११८ प्रत्यपिभ्यां **ग्रहेः** छन्दसि ११९
११९ पदास्वैरि-बाह्यापक्ष्येषु च
१२० विभाषा कृ-वृषोः ( ६ )
१२१ युग्यं च पत्रे
१२२ अमावस्यदन्यतरस्याम्
१२३ छन्दसि निष्टर्क्य-देवहूय-प्रणीयो-न्नीयोच्छिष्य-मर्य-स्तर्याध्वर्य-खन्य-खान्य-देवयज्या-पृच्छ्य-प्रतिषीव्य-ब्रह्मवाद्य-भाव्य-स्ताव्योपचाय्य-पृडानि
१२४ ऋ-हलो**र्ण्यत्** १३१
१२५ ओरावश्यके
१२६ आसु-यु-वपि-रपि-लपि-त्रपि-चमश्च
१२७ आनाय्योऽनित्ये
१२८ प्रणाय्योऽसंमतौ
१२९ पाय्य-सान्नाय्य-निकाय्य-धाय्या मान-हवि-र्निवास-सामिधेनीषु
१३० क्रतौ कुण्डपाय्य-संचाय्यौ
१३१ अग्नौ परिचाय्योपचाय्य-समूह्याः
१३२ चित्याग्निचित्ये च

---

९६ तव्यादयः कृत्यप्रत्ययाः भट्टिकाव्यशास्त्रे षष्ठसर्गे षट्चत्वारिंशपद्यतः क्रमाद् द्रष्टव्याः ।

१०९ क्यप्-इत्यनुवर्तमाने पुनः क्यब् बाधकबाधनार्थम् । 'ओरावश्यके ३।१।१२५' इति ण्यतं बाधित्वा क्यवेव यथा स्यान्न ण्यत्, अवश्यस्तुत्यः । इति ।

१३३ ण्वुल्-तृचौ
१३४ नन्दि-ग्रहि-पचादिभ्यो ल्यु-णिन्यचः
(वा०) अण्विधिः सर्वधातुभ्यः पठ्यन्ते च पचादयः । अण्बाधनार्थमेव स्यात्, सिध्यन्ति श्वपचादयः ॥
१३५ इगुपध-ज्ञा-प्री-किरः कः १३६
१३६ आतश्चोपसर्गे १३७
१३७ पा-घ्रा-ध्मा-धेट्-दृशः शः १३९
१३८ अनुपसर्गाल्लिम्प-विन्द-धारि-पारि-वेद्युदेजि-चेति-साति-साहिभ्यश्च १४१
१३९ ददाति-दधात्योर्विभाषा १४०
१४० ज्वलिति-कसन्तेभ्यो णः (७) १४३
१४१ श्याद्-व्यधास्रु-संस्र्वतीणवसा-वहृ-लिह-श्लिष-श्वसश्च
१४२ दु-न्योरनुपसर्गे
१४३ विभाषा ग्रहः १४४
१४४ गेहे कः
१४५ शिल्पिनि ष्वुन् १४७
(वा०) नृति-खनि-रञ्जिभ्य एव
१४६ गः स्थकन् १४७
१४७ ण्युट् च १४८
१४८ हश्च व्रीहि-कालयोः
१४९ प्रु-सृल्वः समभिहारे वुन् १५०
१५० आशिषि च

[1]प्रत्ययो [2]मुण्ड [3]-विदां [4]दीपजन-
[5]क्रचादिभ्योऽव [6]द्य [7]युग्यं च
[8]श्याद्व्यधा दश ॥

इति पाणिनीयसूत्रपाठे तृतीयाध्यायस्य प्रथमः पादः ।

## द्वितीयः पादः

( सोपपदकृद्विधिरितः )

१ कर्मण्यण् ५८।२
२ ह्वा-वा-मश्च
३ आतोऽनुपसर्गे कः ६०।७
४ सुपि स्थः ८३
५ तुन्द-शोकयोः परिमृजा-पनुदोः
(वा०) कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् ।
६ प्रे दा-ज्ञः
७ समि ख्यः
८ गा-पोष्टक्
९ हरतेरनुद्यमनेऽच् ११।१५

---

१४१ श्यैङ्-आदन्तधातु-व्यध-आस्रु-संस्रु-अतीण्-अवसा-अवहृ-लिह-श्लिष-श्वस— इत्येते धातवः ।

१ इतः सोपपद-कृत् प्रारभ्यते । भट्टि-काव्यशास्त्रे षष्ठसर्गे ८७ सप्ताशीतितमपद्यात्तच्छटा दृश्या ।

४ इतः सुपि कर्मणि इत्युभयं [illegible] । अकर्मके सुपि, सकर्मके कर्मणि, इति विवेकः ।

१० वयसि च
११ आङि ताच्छील्ये
१२ अर्हः
१३ स्तम्ब-कर्णयो-रमि-जपोः
१४ शमि धातोः संज्ञायाम्
१५ अधिकरणे शेतेः १६
१६ चरेष्टः १७।२३
१७ भिक्षा-सेना-दायेषु च
१८ पुरोऽग्रतोऽग्रेषु सर्तेः १९
१९ पूर्वे कर्तरि
२० कृञो हेतु-ताच्छील्यानुलोम्येषु ( १ ) २४
२१ दिवा-विभा-निशा-प्रभा-भास्का-रान्तानन्तादि-वहु-नान्दी-किं-लिपि-लिवि-वलि-भक्ति-कर्तृ-चित्र-क्षेत्र-संख्या-जङ्घा-वाह्वहर्यत्तद्धनुररुःषु
(वा०) कियत्तद्वहुषु कृञोऽज्विधानम् ।
२२ कर्मणि भृतौ
२३ न शब्द-श्लोक-कलह-गाथा-वैर-चाटु-सूत्र-मन्त्र-पदेषु
२४ स्तम्ब-शकृतोरिन् २७
२५ हरतेर्दृति-नाथयोः पशौ
२६ फलेग्रहिरात्मम्भरिश्च
२७ छन्दसि वन-सन-रक्षि-मथाम्
२८ एजेः खश् ३७
२९ नासिका-स्तनयोर्ध्मा-धेटोः ३०
३० नाडी-मुष्टचोश्च
३१ उदि कूले रुजि-वहोः
३२ वहाभ्रे लिहः
३३ परिमाणे पचः ३४
३४ मित-नखे च
३५ विध्वरुषोस्तुदः
३६ असूर्य-ललाटयोर्दृशि-तपोः
३७ उग्रम्पश्येरम्मद-पाणिन्धमाश्च
३८ प्रिय-वशे वदः खच् ४७
(वा०) खच्प्रकरणे गमेः सुप्युपसंख्यानम्
(वा०) विहायसो विह च
(वा०) खच्च डिद्वा वक्तव्यः
(वा०) डे च विहायसो विहादेशो वक्तव्यः
३९ द्विषत्-परयोस्तापेः
४० वाचि यमो व्रते ( २ )
४१ पूः-सर्वयोर्दारि-सहोः
४२ सर्व-कूलाभ्र-करीषेषु कषः
४३ मेघर्ति-भयेषु कृञः ४४
४४ क्षेम-प्रिय-मद्रेऽण्च
४५ आशिते भुवः करण-भावयोः
४६ संज्ञायां भृ-तॄ-वृ-जि-धारि-सहि-तपि-दमः ४७
४७ गमश्च ४८
४८ अन्तात्यन्ताध्व-दूर-पार-सर्वानन्तेषु डः ५०
(वा०) अन्यत्रापि दृश्यत इति वक्तव्यम्
४९ आशिषि-हनः
(वा०) कर्मणि समि च ५५

---

१६ इतः टाऽधिकारः । ततः अष्टाविंशसूत्रतः खशोऽधिकारः । यो हि भट्टिकाव्य-शास्त्रे षष्ठे सर्गे चतुर्णवतितमपद्यान् निरर्गलं फलति । पुनर्धातुग्रहणं वाधक-विषये प्रवृत्त्यर्थम् । तेन कृञो हेत्विति न टः ।

५० अपे क्लेश-तमसोः
५१ कुमार-शीर्षयोर्णिनिः
५२ लक्षणे जाया-पत्योष्टक् ५४
५३ अमनुष्य-कर्तृके च
५४ शक्तौ हस्ति-कपाटयोः
५५ पाणिघ-ताडघौ शिल्पिनि
५६ आढ्य-सुभग-स्थूल-पलित-नग्नान्ध-प्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ५७
५७ कर्तरि भुवः खिष्णुच्-खुकञौ
५८ स्पृशोऽनुदके क्विन् ६०
५९ ऋत्विग्-दधृक्-स्रग्-दिगुष्णिगञ्चु-युजि-क्रुञ्चां च
६० त्यदादिषु दृशोऽनालोचने कञ्च (३)
(वा०) समानान्ययोश्चेति वक्तव्यम्
(वा०) क्सोऽपि वाच्यः
६१ सत्-सू-द्विष-द्रुह-दुह-युज-विद-भिद-च्छिद-जि-नी-राजामुपसर्गेऽपि क्विप् ७७
६२ भजो ण्विः ६४
६३ छन्दसि सहः ६७
६४ वहश्च ६६
६५ कव्य-पुरीष-पुरीष्येषु ञ्युट् ६६
६६ हव्येऽनन्तःपादम्
६७ जन-सन-खन-क्रम-गमो विट् ६९
६८ अदोऽनन्ने ६९
६९ क्रव्ये च
७० दुहः कब्घश्च ७२
७१ मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ७२
७२ अवे यजः ७३

७३ विजुपे छन्दसि ७५, ७६
७४ आतो मनिन्क्वनिब्वनिपश्च ७५
७५ अन्येभ्योऽपि दृश्यन्ते
७६ क्विप् च ७७
७७ स्थः क च
७८ सुप्यजातौ णिनिस्ताच्छील्ये ८३।८
(वा०) साधुकारिणि च
(वा०) ब्रह्मणि वदः
७९ कर्तर्युपमाने
८० व्रते (४)
८१ बहुलमाभीक्ष्ण्ये
८२ मनः ८३
८३ आत्ममाने खश्च
८४ भूते १२२
८५ करणे यजः
८६ कर्मणि हनः ९२।८८
८७ ब्रह्म-भ्रूण-वृत्रेषु क्विप् ९२
८८ बहुलं छन्दसि
८९ सु-कर्म-पाप-मन्त्र-पुण्येषु कृञः
९० सोमे सुञः
९१ अग्नौ चेः ९२
९२ कर्मण्यग्न्याख्यायाम्
९३ कर्मणीनि वि-क्रियः
९४ दृशेः क्वनिप् ९६
९५ राजनि युधि-कृञः ९६
९६ सहे च
९७ सप्तम्यां जनेर्डः १०१
९८ पञ्चम्यामजातौ
९९ उपसर्गे च संज्ञायाम् १००
१०० अनौ कर्मणि (५)
१०१ अन्येष्वपि दृश्यते

१०२ निष्ठा
१०३ सु-यजोर्ङ्वनिप्
१०४ जीर्यतेरतृन्
१०५ **छन्दसि** लिट् १०७
१०६ **लिट:** कानज्वा १०९
१०७ **क्वसुश्च** १०९
१०८ भाषायां सद-वस-श्रुव:
१०९ उपेयिवाननाश्वाननूचानश्च
११० लुङ्
१११ **अनद्यतने** लङ् १२२
११२ **अभिज्ञावचने लृट्** ११४
११३ न यदि
११४ विभाषा साकाङ्क्षे
११५ **परोक्षे लिट्** ११८,११७
११६ ह-शश्वतोर्लङ् **च** ११७
११७ प्रश्ने चासन्नकाले
११८ **लट् स्मे** १२२।११९
११९ अपरोक्षे च
१२० ननौ **पृष्ट-प्रतिवचने** (६) १२१
१२१ न-न्वोर्विभाषा १२२
१२२ पुरि लुङ् चास्मे
१२३ **वर्तमाने** लट् ३।३।१
१२४ **लट: शतृ-शानचाव**प्रथमा-समानाधिकरणे १२६
१२५ संबोधने च
१२६ लक्षण-हेत्वो: क्रियाया:
१२७ तौ सत्
१२८ पूङ्यजो: शानन्
१२९ ताच्छील्य-वयो-वचन-शक्तिषु चानश्
१३० इङ्-धार्यो: **शत्रकृच्छ्रिणि** १३३
१३१ द्विषोऽमित्रे
१३२ सुञो यज्ञ-संयोगे
१३३ अर्ह: प्रशंसायाम्
१३४ आ **क्वेस्तच्छील-तद्धर्म-तत्साधुकारिषु** १७८
१३५ तृन्
१३६ अलंकृञ्-निराकृञ्-प्रजनोत्पचो-त्पतोन्मद-रुच्यपत्रप-वृतु-वृधु-सहचर **इष्णुच्** १३८
१३७ **णेश्छन्दसि** १३८
१३८ **भुवश्च** १३१
१३९ ग्ला-जि-स्थश्च ग्स्नु:
१४० त्रसि-गृधि-धृषि-क्षिपे: क्नु: (७)
१४१ शमित्यष्टाभ्यो **घिनुण्** १४५
१४२ संपृचानुरुधाङ्-यमाङ्-यस-परिसृ-संसृज-परिदेवि-संज्वर-परिक्षिप-परिरट-परिवद-परिदह-परिमुह-दुष-द्विष-द्रुह-दुह-युजाक्रीड-विवि-च-त्यज-रज-भजातिचरापचरामु-षाभ्याहनश्च

---

१०७ क्वसुरपि भाषायामित्यनुकृष्य प्रयुज्यते ।
१२४ लट् इति अनुवर्तमानेऽपि पुनर्लट् इत्युक्ति: प्रथमासमानाऽधिकरणेऽपि स्यादिति । सन् घट:, विद्यमानो ब्राह्मण: इत्यादि ।
१३० शतृ + अकृच्छ्रिणि । नपुंसकं पदम् । अधीयन् ... विद्यां धारयन् ।
१३५ इतो हि तच्छील-प्रत्ययाधिकार:। यो हि भट्टिकाव्यशास्त्रे सप्तमसर्गतश्चलति ।

१४३ वौ कष-लस-कत्थ-स्रम्भः १४४
१४४ अपे च लषः
१४५ प्रे लप-सृ-द्रु-मथ-वद-वसः
१४६ निन्द-हिंस-क्लिश-खाद-विनाश-परिक्षिप-परिरट-परिवादि-व्याभाषा-सूञो वुञ् १४७
१४७ देवि-क्रुशोश्चोपसर्गे
१४८ चलन-शब्दार्थादकर्मकाद् युच् १४९।१५३
१४९ अनुदात्तेतश्च हलादेः
१५० जु-चङ्क्रम्य-दन्द्रम्य-सृ-गृधि-ज्वल-शुच-लष-पत-पदः
१५१ क्रुध-मण्डार्थेभ्यश्च
१५२ न यः १५३
१५३ सूद-दीप-दीक्षश्च
१५४ लष-पत-पद-स्था-भू-वृष-हन-कम-गम-शॄभ्य उकञ्
१५५ जल्प-भिक्ष-कुट्ट-लुण्ट-वृङः षाकन्
१५६ प्रजोरिनिः १५७
१५७ जि-दृ-क्षि-विश्रीण्वमाव्यथाभ्यम-परिभू-प्रसूभ्यश्च
१५८ स्पृहि-गृहि-पति-दयि-निद्रातन्द्रा-श्रद्धाभ्य-आलुच्
१५९ दा-धेट्-सि-शद-सदो रुः
१६० सृ-घस्यदः क्मरच् (८)
१६१ भञ्ज-भास-मिदो घुरच्
१६२ विदि-भिदि-च्छिदेः कुरच्
१६३ इण्-नश्-जि-सर्तिभ्यः क्वरप् १६४
१६४ गत्वरश्च
१६५ जागरूकः १६६
१६६ यज-जप-दशां यङः
१६७ नमि-कम्पि-स्म्यजस-कम-हिंस-दीपो रः
१६८ सनाशंस-भिक्ष उः १७०
१६९ विन्दुरिच्छुः
१७० क्याच्छन्दसि १७१
१७१ आदृ-गम-हन-जनः कि-किनौ लिट् च
(वा०) भाषायां धाञ्-कृ-सृ-गमि-जनि-नमिभ्यः ।
१७२ स्वपि-तृषोर्नजिङ्
१७३ शॄ-वन्द्योरारुः
१७४ भियः क्रुक्-लुकनौ
१७५ स्थेश-भास-पिस-कसो वरच् १७६
१७६ यश्च यङः
१७७ भ्राज-भास-धुर्वि-द्युतोर्जि-पॄ-जु-ग्रावस्तुवः क्विप् १७९
१७८ अन्येभ्योऽपि दृश्यते
१७९ भुवः संज्ञान्तरयोः १८०
१८० वि-प्र-संभ्यो ड्वसंज्ञायाम् (९)
( वा० ) डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानम् ।
१८१ धः कर्मणि ष्ट्रन् १८३
१८२ दाम्नी-शस-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-दश-नहः करणे १८६
१८३ हल-सूकरयोः पुवः
१८४ अर्ति-लू-धू-सू-खन-सह-चर इत्रः १८६
१८५ पुवः संज्ञायाम् १८६
१८६ कर्तरि चर्षि-देवतयोः

१८७ ञीतः क्तः १८८

१८८ मति-बुद्धि-पूजार्थेभ्यश्च

[1]कर्मणि [2]दिवा [3]पूःसर्व [4] सत्सू [5] बहुल- [6]मन्येष्वपि [7]नन्वोः [8]शमिति [9]भञ्जभास [10]धःकर्मण्यष्टौ ।

इति पाणिनीयसूत्रपाठे तृतीयाध्यायस्य द्वितीयः पादः ।

## तृतीयः पादः

१ उणादयो बहुलम् ३

२ भूतेऽपि दृश्यन्ते

३ भविष्यति गम्यादयः १५

४ यावत् पुरा-निपातयोर्लट् ९

५ विभाषा कदा-कर्ह्योः ९

६ किंवृत्ते लिप्सायाम्

७ लिप्स्यमान-सिद्धौ च

८ लोडर्थलक्षणे च ९

९ लिङ् चोर्ध्वमौहूर्तिके

१० तुमुन्-ण्वुलौ क्रियायां क्रियार्थायाम् १३४

११ भाववचनाश्च

१२ अण् कर्मणि च

१३ लृट् शेषे च १५

१४ लृटः सद्वा

१५ अनद्यतने लुट्

१६ पद-रुज-विश-स्पृशो घञ् ५५

१७ सृ स्थिरे

१८ भावे ११२

१९ अकर्तरि च कारके संज्ञायाम् ११२

२० परिमाणाख्यायां सर्वेभ्यः (१)

(वा०) दार-जारौ कर्तरि णिलुक् च ।

२१ इङश्च

२२ उपसर्गे रुवः

२३ समि यु-द्रु-दुवः

२४ श्रि-णी-भुवोऽनुपसर्गे

२५ वौ क्षु-श्रुवः

२६ अवोदोर्नियः

२७ प्रे द्रु-स्तु-स्रुवः

२८ निरभ्योः पू-ल्वोः

२९ उन्न्योर्ग्रः ३०

३० कॄ धान्ये

३१ यज्ञे समि स्तुवः

३२ प्रे स्त्रोऽयज्ञे ३४

३३ प्रथने वावशब्दे ३४

३४ छन्दोनाम्नि च

३५ उदि ग्रहः ३६

३६ समि मुष्टौ

३७ परि-न्योर्नीणोर्द्यूताभ्रेषयोः

३८ परावनुपात्यय इणः

---

१ वर्तमानसंज्ञायाम् उणादयो बहुलमिति निष्कर्षः । "संज्ञासु धातु-रूपाणि प्रत्ययाश्च ततः परे । कार्याद् विद्यादनुबन्धमेतच्छास्त्रमुणादिषु" ॥

१८–१९ इतः प्रभृति घञादिप्रत्ययाधिकारः । यो हि भट्टिकाव्यशास्त्रे सप्तमे सर्गे [illegible]ति ।

३८ क्रमप्राप्तस्यानतिपातोऽनुपात्ययः ।

३९ व्युपयोः शेतेः पर्याये
४० हस्तादाने चेरस्तेये (२) ४२
४१ निवास-चिति-शरीरोपसमाधानेष्वादेश्च कः ४२
४२ सङ्घे चानौत्तराधर्ये
४३ कर्मव्यतिहारे णच्स्त्रियाम्
४४ अभिविधौ भाव इनुण्
४५ आक्रोशेऽवन्योर्ग्रहः ४७
४६ प्रे लिप्सायाम्
४७ परौ यज्ञे
४८ नौ वृ धान्ये
४९ उदि श्रयति-यौति-पू-द्रुवः
५० विभाषाऽऽङि रु-प्लुवोः ५५
५१ अवे ग्रहो वर्षप्रतिबन्धे ५३
५२ प्रे वणिजाम् ५४
५३ रश्मौ च
५४ वृणोतेराच्छादने
५५ परौ भुवोऽवज्ञाने
५६ एरच्
(वा०) भयादीनामुपसंख्यानम्
५७ ऋदोरप् ८७
५८ ग्रह-वृ-दृ-निश्चि-गमश्च
(वा०) घञर्थे कविधानम्
५९ उपसर्गेऽदः ६०
६० नौ ण च (३)
६१ व्यध-जपोरनुपसर्गे ६५
६२ स्वन-हसोर्वा ६५
६३ यमः समुप-नि-विषु च
६४ नौ गद-नद-पठ-स्वनः ६५
६५ क्वणो वीणायां च
६६ नित्यं पणः परिमाणे
६७ मदोऽनुपसर्गे
६८ प्रमद-संमदौ हर्षे
६९ समुदोरजः पशुषु
७० अक्षेषु ग्लहः
७१ प्रजने सर्तेः
७२ ह्वः संप्रसारणं च न्यभ्युपविषु ७५
७३ आङि युद्धे
७४ निपानमाहावः
७५ भावेऽनुपसर्गस्य ७६
७६ हनश्च वधः ८७
७७ मूर्तौ घनः
७८ अन्तर्घनो देशे
७९ अगारैकदेशे प्रघणः प्रघाणश्च
८० उद्घनोऽत्याधानम् (४)
८१ अपघनोऽङ्गम्
८२ करणेऽयो-वि-द्रुषु ८४
८३ स्तम्बे क च
८४ परौ घः
८५ उपघ्न आश्रये
८६ सङ्घोद्घौ गण-प्रशंसयोः
८७ निघो निमितम्
८८ ड्वितः क्त्रिः
८९ ट्वितोऽथुच्
९० यज-याच-यत-विच्छ-प्रच्छ-रक्षो नङ्
९१ स्वपो नन्
९२ उपसर्गे घोः किः ९३
९३ कर्मण्यधिकरणे च

९४ **स्त्रियां क्तिन्** ११२।९७
( वा० ) श्रु-यजि-स्तुभ्यः करणे
( वा० ) ग्ला-म्ला-ज्या-हाभ्यो निः
( वा० ) संपदादिभ्यः क्विप्
( वा० ) क्तिन्नपीष्यते
९५ स्था-गा-पा-पचो **भावे** ९६
९६ मन्त्रे वृषेष-पच-मन-विद-भू-वी-रा **उदात्तः** १००
९७ ऊति-यूति-जूति-साति-हेति-कीर्तयश्च
९८ व्रज-यजोर्भावे **क्यप्** १००
९९ संज्ञायां समज-निषद-निपत-मन-विद-षुञ्-शीङ्-भृञिणः
१०० कृञः **श** च १०१ ( ५ )
१०१ इच्छा
(वा०)परिचर्या-परिसर्या-मृगयाटाट्या-नामुपसंख्यानम्
१०२ **अ** प्रत्ययात् १०३
१०३ गुरोश्च हलः
१०४ षिद्भिदादिभ्योऽङ् १०६
( वा० ) क्रपेः सम्प्रसारणं च
१०५ चिन्ति-पूजि-कथि-कुम्बि-चर्चश्च
१०६ आतश्चोपसर्गे
१०७ ण्यास-श्रन्थो युच्
१०८ रोगाख्यायां ण्वुल् बहुलम् ११०
( वा० ) इक् कृष्यादिभ्यः
( वा० ) धात्वर्थनिर्देशे ण्वुल्वक्तव्यः
( वा० ) इक्श्तिपौ धातुनिर्देशे
( वा० ) वर्णात्कारः
( वा० ) मत्वर्थाच्छः
१०९ संज्ञायाम्
११० विभाषाख्यान-परिप्रश्नयोरिञ्च
१११ पर्यायार्हणोत्पत्तिषु ण्वुच्
११२ आक्रोशे नञ्यनिः
११३ कृत्यल्युटो बहुलम्
११४ **नपुंसके भावे** क्तः ११६
११५ **ल्युट्** च ११७
११६ कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम्
११७ **करणाधिकरणयोश्च** १२५
११८ **पुंसि संज्ञायां घः** प्रायेण १२५।११९
११९ गोचर-संचर-वह-व्रज-व्यजापण-निगमाश्च
१२० अवे तॄ-स्त्रोर्घञ् (६) १२५
१२१ हलश्च
१२२ अध्याय-न्यायोद्याव-संहारा-धारावायाश्च
१२३ उदङ्कोऽनुदके
१२४ जालमानायः
१२५ खनो घ च
१२६ **ईषद्-दुः-सुषु कृच्छ्राकृच्छ्रार्थेषु खल्** १२७, १२८, १२९, १३०
१२७ कर्तृ-कर्मणोश्च भू-कृञोः
१२८ आतो **युच्** १३०
१२९ **छन्दसि** गत्यर्थेभ्यः १३०
१३० अन्येभ्योऽपि दृश्यते

९४ ( ॠल्वादिभ्यः क्तिन्निष्ठावद् वाच्यः ) भावेऽर्थे ल्युटा क्लीबे, घञजब्भिः पुंसि, क्तिना स्त्रियामित्येकस्यैव धातो रूपत्रयमेकस्मिन्नर्थे ।

( वा० ) भाषायां शासि-युधि-दृशि-धृषि-मृषिभ्यो युज्वाच्यः
१३१ वर्तमान-सामीप्ये **वर्तमानवद्वा** १३२
१३२ **आशंसायां** भूतवच्च १३३
१३३ क्षिप्र-वचने ऌट्
१३४ आशंसा-वचने लिङ्
१३५ **नानद्यतनवत्क्रियाप्रबन्ध-**सामीप्ययोः १३८
१३६ **भविष्यति मर्यादा-वचनेऽवर-स्मिन्** १३९।१३८।१३७
१३७ **काल-विभागे चानहोरात्राणाम्** १३८
१३८ परस्मिन्विभाषा
१३९ **लिङ्निमित्ते ऌङ् क्रिया-तिपत्तौ** १४१
१४० **भूते च** (७) १४१
१४१ **वोताप्योः** १५१
१४२ **गर्हायां लडपि**-जात्वोः १४४।१४३
१४३ विभाषा कथमि लिङ् च
१४४ **किंवृत्ते लिङ्लृटौ** १४५
१४५ **अनवक्लृप्त्यमर्षयोरकिं-**वृत्तेऽपि १४८
१४६ किंकिलास्त्यर्थेषु ऌट्
१४७ जातु-यदोर्लिङ् १५०
१४८ **यच्च-यत्रयोः** १५०
१४९ गर्हायां च
१५० **चित्रीकरणे** च १५१
१५१ शेषे ऌडयदौ
१५२ उताप्योः समर्थयोर्लिङ् १५३
१५३ काम-प्रवेदनेऽकच्चिति
१५४ **संभावनेऽलमिति चेत् सिद्धाप्रयोगे** १५५
१५५ **विभाषा** धातौ संभावन-वचनेऽयदि
१५६ हेतु-हेतुमतोर्लिङ् १५६
१५७ **इच्छार्थेषु** लिङ्-लोटौ १५९
१५८ **समानकर्तृकेषु** तुमुन् १५९
१५९ **लिङ्** च १६०
१६० इच्छार्थेभ्यो विभाषा वर्तमाने(?)
१६१ **विधि-निमन्त्रणामन्त्रणाधीष्ट-संप्रश्न-प्रार्थनेषु** लिङ् १६२
१६२ **लोट्** च १६३
१६३ **प्रैषातिसर्ग-प्राप्तकालेषु** कृत्याश्च १६५
१६४ लिङ् **चोर्ध्व-मौहूर्तिके** ,,
१६५ **स्मे लोट्** १६६
१६६ अधीष्टे च
१६७ **काल-समय-वेलासु** तुमुन् १६८
१६८ **लिङ्** यदि १६९
१६९ अर्हे कृत्य-तृचश्च
१७० **आवश्यकाधमर्ण्ययोर्णिनिः** १७१
१७१ **कृत्याश्च** १७२
१७२ शकि लिङ् च
१७३ आशिषि लिङ्-लोटौ १७४
१७४ क्तिच् क्तौ च संज्ञायाम्

---

१७१ पाठोऽर्थनिर्देशार्थम् । षष्ठी वा भवति कृत्ययोगे ।

१७५ **माङि लुङ्** १७६

१७६ स्मोत्तरे लङ् च

[1]उणादय [2]इङो [3]निवास-[4]व्यधजपो[5]रे-पधन [6]इच्छा [7]हलश्च [8]वोताप्यो-[9]विधिः षोडश १६ ॥

**इति पाणिनीयसूत्रपाठे तृतीयाध्यायस्य तृतीयः पादः ।**

## चतुर्थः पादः

१ **धातु-सम्बन्धे** प्रत्ययाः ६

२ क्रियासमभिहारे **लोट् लोटो हि-स्वौ वा च त-ध्वमोः** ३

३ समुच्चयेऽन्यतरस्याम्

४ यथाविध्य**नुप्रयोगः** पूर्वस्मिन् ५

५ समुच्चये सामान्यवचनस्य

६ **छन्दसि** लुङ्-लङ्-लिटः १७

७ लिङर्थे **लेट्** ८

८ उपसंवादाशङ्कयोश्च

९ **तुमर्थे** से-सेनसेऽसेन्-क्से-कसेनध्यै-अध्यैन्-कध्यै-कध्यैन्-शध्यै-शध्यैन्-तवै-तवेङ्-तवेनः १३

१० प्रयै रोहिष्यै अव्यथिष्यै

११ दृशे विख्ये च

१२ शकि णमुल्-कमुलौ

१३ ईश्वरे तोसुन्-कसुनौ

१४ **कृत्यार्थे** तवै-केन्-केन्य-त्वनः १५

१५ अवचक्षे च

१६ **भावलक्षणे** स्थेण्-कृञ्-वदि-चरि-हु-तमि-जनिभ्यस्तोसुन् १७

१७ सृपि-तृदोः कसुन्

१८ अलं-खल्वोः प्रतिषेधयोः प्राचां **क्त्वा** २४

१९ उदीचां माङो व्यतीहारे

२० परावरयोगे च ( १ )

२१ **समान-कर्तृकयोः पूर्वकाले** २६

२२ **आभीक्ष्ण्ये णमुल्च** २३, २४

२३ न यद्यनाकाङ्क्षे

२४ विभाषाऽग्रे-प्रथम-पूर्वेषु

२५ कर्मण्याक्रोशे **कृञः** खमुञ् २८

२६ स्वादुमि **णमुल्** ५८

२७ अन्यथैवं-कथमित्थंसु **सिद्धा-प्रयोगश्चेत्** २८

२८ यथा-तथयोरसूया-प्रतिवचने

२९ **कर्मणि** दृशि-विदोः साकल्ये ३६

३० यावति विन्द-जीवोः

३१ चर्मोदरयोः **पूरेः** ३२

३२ **वर्षप्रमाण** ऊलोपश्चास्यान्यतर-स्याम् ३३

---

१७५ सर्वलकाराऽपवादो माङ्योगे लुङ् ।

१ अत्र धातु-सम्बन्धे धात्वर्थ-सम्बन्धे फलतो विशेषण-विशेष्यभावे प्रत्यया भवन्तीत्यर्थः । तेन अयथाकालोक्ता अपि प्रत्ययाः साधवः । वसन् ददर्श, पठन् गमिष्यति इत्यादि । 'प्रत्यय' इत्यनुवर्तमाने प्रत्यय-ग्रहणम् तद्धितादि-ष्वपि । यथा—गौः अस्यास्तीति गोमान् आसीत्, गोमान् भविष्यति इति वर्तमानार्थको मतुप् भूते भविष्यत्यपि साधुरेव प्रयुज्यते ।

३३ चेले क्नोपेः
३४ निमूल-समूलयोः कषः
३५ शुष्क-चूर्ण-रूक्षेषु पिषः
३६ समूलाकृत-जीवेषु हन्-कृञ्-ग्रहः
३७ **करणे** हनः ४०
३८ स्नेहने पिषः
३९ हस्ते वर्ति-ग्रहोः
४० स्वे पुषः ( २ )
४१ अधिकरणे **बन्धः** ४२
४२ संज्ञायाम्
४३ **कर्त्रोर्जीव**-पुरुषयोर्नशि-वहोः ४५
४४ ऊर्ध्वे शुषि-पूरोः
४५ उपमाने कर्मणि च
४६ कषादिषु यथाविध्यनुप्रयोगः
४७ उपदंशस्तृ**तीयायाम्** ५१
४८ हिंसार्थानां च समानकर्मकाणाम्
४९ **सप्तम्यां** चोपपीड-रुध-कर्षः ५१
५० समासत्तौ
५१ प्रमाणे च
५२ अपादाने **परीप्सायाम्** ५३
५३ **द्वितीयायां** च ५८
५४ **स्वाङ्गे**ऽध्रुवे ५५
५५ परिक्लिश्यमाने च
५६ विशि-पति-पदि-स्कन्दां व्याप्य-मानासेव्यमानयोः
५७ अस्यति-तृषोः क्रियान्तरे कालेषु
५८ नाम्न्यादिशि-ग्रहोः
५९ अव्ययेऽयथाभिप्रेताख्याने **कृञः क्त्वा-णमुलौ** ६०,६४
६० तिर्यच्यपवर्गे (३)
६१ स्वाङ्गे तस्प्रत्यये कृ-भ्वोः ६२
६२ नाधार्थप्रत्यये च्व्यर्थे
६३ तूष्णीमि भुवः ६४
६४ अन्वच्यानुलोम्ये
६५ शक-धृष-ज्ञा-ग्ला-घट-रभ-लभ-क्रम-सहार्हास्त्यर्थेषु **तुमुन्** ६६
६६ पर्याप्तिवचनेष्वलमर्थेषु
६७ **कर्तरि** कृत् ६९
६८ भव्य-गेय-प्रवचनीयोपस्थानीय-जन्याप्लाव्यापात्या वा
६९ लः कर्मणि च भावे चाकर्मकेभ्यः
७० तयोरेव कृत्य-क्त-खलर्थाः
७१ आदिकर्मणि **क्तः कर्तरि** च ७२
७२ गत्यर्थाकर्मक-श्लिष-शीङ्-स्थास-वस-जन-रुह-जीर्यतिभ्यश्च
७३ दाश-गोघ्नौ सम्प्रदाने
७४ भीमादयोऽपादाने
७५ ताभ्यामन्यत्रोणादयः
७६ क्तोऽधिकरणे च ध्रौव्य-गति-प्रत्यव-सानार्थेभ्यः
७७ **लस्य** ११७
७८ तिप्-तस्-झि-सिप्-थस्-थ-मिब्-वस्-मस्-तातां-झ-थासाथां-ध्व-मिड्-वहि-महिङ्
७९ **टित** आत्मनेपदानां टेरे ८०
८० थासः से
८१ **लिटस्त-झयोरेशिरेच्** ८२

७६ समासोऽत्र कृत् । इतोऽग्रे तिङ्ज्ञेयस्तत्र प्रत्ययविकार एव प्रायो दर्शितः ।

८२ **परस्मैपदानां णलतुसुस्थल-थुसणल्वमाः** ८४
८३ विदो **लटो** वा ८४
८४ ब्रुवः पञ्चानामादित आहो ब्रुवः
८५ **लोटो** लङ्वत् ९३
८६ एरुः
८७ **सेर्ह्यपिच्च** ८८
८८ वा छन्दसि
८९ मेर्निः
९० **आमेतः** ९१
९१ स-वाभ्यां वामौ
९२ आडुत्तमस्य पिच्च ९३
९३ एत ऐ
९४ **लेटोऽडाटौ** ९८
९५ आत **ऐ** ९६
९६ **वैतोऽन्यत्र** ९८
९७ इतश्च **लोपः** परस्मैपदेषु १००
९८ **स उत्तमस्य** ९९
९९ **नित्यं ङितः** १००,१०१
१०० इतश्च (५)
१०१ तस्-थस्-थ-मिपां ताम्-तम्-तामः
१०२ **लिङः** सीयुट् १०८
१०३ **यासुट्-परस्मैपदेषूदात्तो ङिच्च** १०४
१०४ किदाशिषि
१०५ झस्य रन्
१०६ इटोऽत्
१०७ सुट् ति-थोः
१०८ **झेर्जुस्** ११२
१०९ सिजभ्यस्त-विदिभ्यश्च
११० **आतः** १११
१११ **लङः शाकटायनस्यैव** ११२
११२ द्विषश्च
११३ तिङ्-शित् सार्वधातुकम्
११४ **आर्धधातुकं** शेषः ११७
११५ लिट् च
११६ लिङाशिषि
११७ छन्दस्युभयथा

[1]धातुसम्बन्धे [2]समाना[3]धिकरणे [4]स्वाङ्गे [5]लिटस्त [6]स्थस्थमिपां सप्तदश १७ ॥

**इति पाणिनीयसूत्रपाठे तृतीयाध्यायस्य चतुर्थः पादः ।**



९६ वा + एतः + अन्यत्र ।

# अथ चतुर्थोऽध्यायः

## प्रथमः पादः

१ ङ्याप्प्रातिपदिकात् ५।४।१६०
२ स्वौजसमौट्-छष्टाभ्याम्-भिस्-ङे-भ्याम्-भ्यस्-ङसि-भ्याम्-भ्यस्-ङसोसाम्-ङ्योस्-सुप्
३ स्त्रियाम् ८१
४ अजाद्यतष्टाप्
५ ऋन्नेभ्यो ङीप् २४
६ उगितश्च
७ वनो र च
८ पादोऽन्यतरस्याम् ९
९ टाबृचि १०
१० न षट्स्वस्रादिभ्यः १२
११ मनः १३
१२ अनो बहुव्रीहेः १३
१३ डाबुभाभ्यामन्यतरस्याम्
१४ अनुपसर्जनात् ८१
१५ टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः
१६ यञश्च १८
१७ प्राचां ष्फ तद्धितः १९
१८ सर्वत्र लोहितादि-कतन्तेभ्यः
१९ कौरव्य-माण्डूकाभ्यां च
२० वयसि प्रथमे (१)
२१ द्विगोः २४
२२ अपरिमाण-बिस्ताचित-कम्बल्येभ्यो न तद्धित-लुकि २४
२३ काण्डान्तात्क्षेत्रे
२४ पुरुषात्प्रमाणेऽन्यतरस्याम्
२५ बहुव्रीहेरूधसो ङीष् २९,२६
२६ संख्याव्ययादेर्ङीप् २७
२७ दाम-हायनान्ताच्च
२८ अन उपधालोपिनोऽन्यतरस्याम् २९
२९ नित्यं संज्ञाच्छन्दसोः ३१
३० केवल-मामक-भागधेय-पापापर-समानार्य-कृत-सुमङ्गल-भेषजाच्च
३१ रात्रेश्चाजसौ
३२ अन्तर्वत्पतिवतोर्नुक्
३३ पत्युर्नो यज्ञ-संयोगे ३५
३४ विभाषा सपूर्वस्य
३५ नित्यं सपत्न्यादिषु

---

१ शब्द-प्रत्यये स्त्रियाः प्रथममुपादानम् अभ्यर्हितत्वात् । सूत्रेऽपि प्रातिपदिकापेक्षया ङ्यापोः स्त्रीप्रत्यययोः पूर्वमुपादानमद्भुतम् ।
१० 'ष्फ' इति सौत्रः सुलुक् । षित् ङीषर्थः 'षिद्गौरादिभ्यश्च ४।१।४१' इति ।
२० मण्डूकप्लुत्या 'अत' इति चतुर्थसूत्रादनुवृत्तम् । अतश्च शिशुः कन्येति स्त्री-शिशुशब्दे न ङीप् ।

३६ पूतक्रतोरै च ३७
३७ वृषाकप्यग्नि-कुसित-कुसीदाना-
मुदात्तः ३८
३८ मनोरौ वा ३९
३९ वर्णादनुदात्तात्तोपधात्तो नः ४०
४० अन्यतो ङीष् ६५ ( २ )
४१ षिद्-गौरादिभ्यश्च
( वा० ) पिप्पल्यादयश्च
४२ जानपद-कुण्ड-गोण-स्थल-भाज-
नाग-काल-नील-कुश-कामुक-कव-
राद् वृत्यमत्रावपनाकृत्रिमा-श्राणा-
स्थौल्य-वर्णनाच्छादनायोविकार-
मैथुनेच्छा-केशवेशेषु
४३ शोणात्प्राचाम्
४४ वोतो गुणवचनात् ४५
४५ बह्वादिभ्यश्च ४६
( वा० ) कृदिकारादक्तिनः
( वा० ) सर्वतोऽक्तिन्नर्थादित्येके
४६ नित्यं छन्दसि ४७
४७ भुवश्च
४८ पुंयोगादाख्यायाम् ४९
४९ इन्द्र-वरुण-भव-शर्व-रुद्र-मृड-
हिमारण्य-यव-यवन-मातुला-
चार्याणामानुक्
५० क्रीतात्करणपूर्वात् ५१
५१ क्तादल्पाख्यायाम् ५३
५२ बहुव्रीहेश्चान्तोदात्तात् ५३
५३ अस्वाङ्गपूर्वपदाद्वा ५५
५४ स्वाङ्गाच्चोपसर्जनादसंयोगो-
पधात् ५८
५५ नासिकोदरौष्ठ-जङ्घा-दन्त-कर्ण-
शृङ्गाच्च
५६ न क्रोडादि-बह्वचः ५८
५७ सह-नञ्विद्यमान-पूर्वाच्च
५८ नख-मुखात्संज्ञायाम्
५९ दीर्घजिह्वी च च्छन्दसि
६० दिक्पूर्वपदान्ङीप् ( ३ )
६१ वाहः
६२ सख्यशिश्वीति भाषायाम्
६३ जातेरस्त्रीविषयादयोपधात् ६४
६४ पाक-कर्ण-पर्ण-पुष्प-फल-मूल-
वालोत्तर-पदाच्च
६५ इतो मनुष्यजातेः ६६
६६ ऊङुतः ७२
६७ बाह्वन्तात्संज्ञायाम्
६८ पङ्गोश्च
(वा०) श्वशुरस्योकाराकारलोपश्च
६९ ऊरूत्तरपदादौपम्ये ७०
७० संहित-शफ-लक्षण-वामादेश्च
७१ कद्रु-कमण्डल्वोश्छन्दसि ७२
७२ संज्ञायाम्
७३ शार्ङ्गरवाद्यञो ङीन्
(वा०) नृनरयोर्वृद्धिश्च
७४ यङश्चाप् ७५
७५ आवट्याच्च
७६ तद्धिताः ५।४।१६०
७७ यूनस्तिः

७४ 'यङश्चाप्' इत्यत्र चाप् प्रत्ययः, न तु आप् ।

७८ **अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे** ७९,८१,८०
७९ गोत्रावयवात्
८० क्रौड्यादिभ्यश्च (४)
८१ दैवयज्ञि-शौचिवृक्षि-सात्यमुग्रि-काण्ठेविद्धिभ्योऽन्यतरस्याम्
८२ **समर्थानां प्रथमाद्वा** ५।२।१४०
८३ **प्राग्दीव्यतोऽण्** ४।४।२
८४ अश्वपत्यादिभ्यश्च
(वा०) गोरजादिप्रसङ्गे यत्
८५ दित्यदित्यादित्य-पत्युत्तरपदाण्ण्यः
८६ उत्सादिभ्योऽञ्
८७ **स्त्री-पुंसाभ्यां नञ्स्नञौ भवनात्** ५।२।१
८८ द्विगोर्लुगनपत्ये
८९ गोत्रेऽलुगचि ९१
९० **यूनि लुक्** ९१
९१ फक्-फिञोरन्यतरस्याम्
९२ **तस्यापत्यम्** १७६
९३ एको गोत्रे
९४ गोत्राद्यून्यस्त्रियाम्
९५ **अत इञ्** ९७
९६ बाह्वादिभ्यश्च
९७ सुधातुरकङ् च
९८ **गोत्रे** कुञ्जादिभ्यश्च्फञ् १११
९९ नडादिभ्यः **फक्** १०३
१०० हरितादिभ्योऽञः (५)
१०१ यञिञोश्च

१०२ शरद्वच्छुनक-दर्भाद् भृगु-वत्साग्रायणेषु
१०३ द्रोण-पर्वत-जीवन्तादन्यतरस्याम्
१०४ अनृष्यानन्तर्ये बिदादिभ्योऽञ्
१०५ गर्गादिभ्यो **यञ्** १०९
१०६ मधु-बभ्र्वोर्ब्राह्मण-कौशिकयोः
१०७ कपि-बोधादाङ्गिरसे १०९
१०८ **वतण्डाच्च** १०९
१०९ लुक् स्त्रियाम्
११० अश्वादिभ्यः **फञ्** १११
१११ भर्गात् त्रैगर्ते
११२ शिवादिभ्योऽ**ण्** ११९
११३ अवृद्धाभ्यो नदी-मानुषीभ्यस्तन्नामिकाभ्यः
११४ ऋष्यन्धक-वृष्णि-कुरुभ्यश्च
११५ मातुरुत्संख्या-सं-भद्र-पूर्वायाः
११६ कन्यायाः कनीन च
११७ विकर्ण-शुङ्ग-च्छगलाद्वत्स-भरद्वाजात्रिषु
११८ पीलाया वा
११९ ढक्च मण्डूकात्
१२० **स्त्रीभ्यो ढक्** (६) १२१,१२७
१२१ **द्व्यचः** १२२
१२२ इतश्चानिञः
१२३ शुभ्रादिभ्यश्च
१२४ विकर्ण-कुषीतकात् काश्यपे
१२५ भ्रुवो वुक्च
१२६ कल्याण्यादीनामिनङ् च १२७

---

८३ अधिकारः परिभाषा विधिर्वेति त्रिष्वपि दर्शनेषु अपवादविषयं परिहृत्य अण् प्रवर्तते ।

१२७ कुलटाया वा
१२८ चटकाया ऐरक्
१२९ **गोधाया ढ्रक्** १३०,१३१
१३० आरगुदीचाम्
१३१ क्षुद्राभ्यो वा
१३२ **पितृष्वसुश्छण्** १३३,१३४
१३३ **ढकि लोपः** १३४
१३४ मातृष्वसुश्च
१३५ चतुष्पाद्भ्यो **ढञ्** १३६
१३६ गृष्ट्यादिभ्यश्च
१३७ राज-श्वशुराद्यत्
१३८ क्षत्राद् घः
१३९ **कुलात्खः** १४० ( ७ )
१४० **अपूर्वपदादन्यतरस्यां यड्-ढकञौ** १४२
१४१ महाकुलादञ्खञौ
१४२ दुष्कुलाड्ढक्
१४३ **स्वसुश्छः** १४४
१४४ **भ्रातुर्व्यच्च** १४५
१४५ व्यन्सपत्ने
१४६ रेवत्यादिभ्य**ष्ठक्** १४७
१४७ गोत्रस्त्रियाः **कुत्सने** ण च १४९
१४८ **वृद्धाट्ठक्सौवीरेषु बहुलम्** १४९,१५०
१४९ फेश्छ च
१५० फाण्टाहृति-मिमताभ्यां ण-फिञौ
१५१ कुर्वादिभ्यो **ण्यः** १५२
( वा० ) सम्राजः क्षत्रिये
१५२ **सेनान्त-लक्षण-कारिभ्यश्च** १५३

१५३ उदीचामिञ्
१५४ तिकादिभ्यः **फिञ्** १५९
१५५ कौशल्य-कार्मार्याभ्यां च
१५६ अणो द्व्यचः
१५७ **उदीचां वृद्धादगोत्रात्** १५९
१५८ वाकिनादीनां **कुक्च** १५९
१५९ पुत्रान्तादन्यतरस्याम्
१६० प्राचामवृद्धात्फिन्बहुलम् ( ८ )
१६१ मनोर्जातावञ्यतौ षुक्च
१६२ **अपत्यं पौत्रप्रभृति** गोत्रम् १६५
१६३ **जीवति तु वंश्ये युवा** १६४,१६५
१६४ भ्रातरि च ज्यायसि
१६५ वाऽन्यस्मिन्सपिण्डे स्थविरतरे जीवति
१६६ वृद्धस्य च पूजायाम्
१६७ यूनश्च कुत्सायाम्
१६८ **जनपदशब्दात्क्षत्रियादञ्** १७६, १६७
१६९ साल्वेय-गान्धारिभ्यां च
१७० द्व्यञ्मगध-कलिङ्ग-सूरमसादण्
१७१ वृद्धेत्कोसलाजादाञ्ञ्यङ्
१७२ कुरु-नादिभ्यो ण्यः
१७३ साल्वावयव-प्रत्यग्रथ-कलकूटा-श्मकादिञ्
१७४ ते **तद्राजाः** १७६
१७५ कम्बोजाल्लुक् १७६
(वा०) कम्बोजादिभ्य इति वक्तव्यम्
१७६ **स्त्रियामवन्ति-कुन्ति-कुरुभ्यश्च** १७५

१७७ अतश्च
१७८ न प्राच्यभर्गादि-यौधेयादिभ्यः
[1]ङ्याब्द्वि[2]गोः[3]पिद्गौरादि[4]र्वाह्रो दैव[5] यञि[6]यञिञो[7]र्व्यंचो[8]महाकुलान्म[9] नोर्जातौ षोडश १६ ॥

इति पाणिनीयसूत्रपाठे चतुर्थाध्यायस्य प्रथमः पादः ।



## द्वितीयः पादः

१ **तेन रक्तं रागात्** १।३।२।२
२ लाक्षारोचना-शकल-कर्दमाट्ठक्
( वा० ) नील्या अन्
( वा० ) पीतात्कन्
( वा० ) हरिद्रा-महारजनाभ्यामञ्
३ **नक्षत्रेण युक्तः कालः** ६
४ लुबविशेषे ५
५ संज्ञायां श्रवणाश्वत्थाभ्याम्
६ द्वन्द्वाच्छः
७ **दृष्टं साम** ९
८ कलेर्ढक्
९ वामदेवाड्ड्यड्ड्यौ
१० **परिवृतो रथः** १२
११ पाण्डुकम्बलादिनिः
१२ द्वैप-वैयाघ्रादञ्
१३ कौमारापूर्ववचने
१४ **तत्रोद्धृतममत्रेभ्यः** २०
१५ स्थण्डिलाच्छयितरि व्रते
१६ **संस्कृतं भक्षाः** २०
१७ शूलोखाद्यत्
१८ दध्नष्ठक् १९
१९ उदश्वितोऽन्यतरस्याम्
२० क्षीराड्ढञ् ( १ )
२१ **साऽस्मिन्पौर्णमासीति** २३
२२ आग्रहायण्यश्वत्थाट्ठक् २३
२३ विभाषा फाल्गुनी-श्रवणा-कार्तिकी-चैत्रीभ्यः
२४ **साऽस्य देवता** ३५
२५ कस्येत्
२६ शुक्राद् घन्
२७ **अपोनप्त्रपांनप्तृभ्यां** घः २६
२८ छ च २९
( वा० ) शतरुद्राद्घश्च
२९ महेन्द्राद्घाणौ च
३० सोमाट्ट्यण्
३१ वाय्वृतु-पित्रुषसो **यत्** ३२
३२ द्यावापृथिवी-शुनासीर-मरुत्वदग्नीषोम-वास्तोष्पति-गृहमेधाच्छ च
३३ अग्नेर्ढक्
३४ कालेभ्यो भववत्
३५ महाराज-प्रोष्ठपदाट्ठञ्
( वा० ) पूर्णमासादण् वक्तव्यः
३६ पितृव्य-मातुल-मातामह-पितामहाः
३७ **तस्य समूहः** ५४,५१
३८ भिक्षादिभ्योऽण्
३९ गोत्रोक्षोष्ट्रोरभ्र-राज-राजन्य-राजपुत्र-वत्स-मनुष्याजाद्वुञ्
( वा० ) वृद्धाच्चेति वक्तव्यम्
४० **केदाराद्यञ्च** (२) ४१
४१ ठञ्कवचिनश्च

४२ ब्राह्मण-माणव-वाडवाद्यत्
४३ ग्राम-जन-बन्धुभ्यस्तल्
४४ अनुदात्तादेरञ् ४५
४५ खण्डिकादिभ्यश्च
४६ चरणेभ्यो धर्मवत्
४७ अचित्त-हस्ति-धेनोष्ठक्
४८ केशाश्वाभ्यां यञ्छावन्यतरस्याम्
४९ पाशादिभ्यो यः ५०
५० खल-गो-रथात्
५१ इनि-त्र-कट्यचश्च
( वा० ) खलादिभ्य इनिर्वक्तव्यः
५२ **विषयो देशे** ५४
५३ राजन्यादिभ्यो वुञ्
५४ भौरिक्याद्यैषुकार्यादिभ्यो विधल्भ-
क्तलौ
५५ **सोऽस्या**दिरिति च्छन्दसः
प्रगाथेषु ५६
५६ संग्रामे प्रयोजन-योद्धृभ्यः
५७ तदस्यां प्रहरणमिति क्रीडायां णः
५८ घञः साऽस्यां क्रियेति ञः
५९ **तदधीते तद्वेद** ६६
६० क्रतूक्थादि-सूत्रान्ताट्ठक् (४)
(वा०) आख्यानाख्यायिकेतिहास-
पुराणेभ्यश्च
( वा० ) इन्पदोत्तरपदात् शतषष्टेः
पिकन् पथः
६१ क्रमादिभ्यो वुन्
६२ अनुब्राह्मणादिनिः
६३ वसन्तादिभ्यष्ठक्
६४ **प्रोक्ताल्लुक्** ६६,६५

६५ सूत्राच्च कोपधात्
६६ छन्दोब्राह्मणानि च तद्विषयाणि
६७ **तदस्मिन्नस्तीति देशे तन्नाम्नि** ७०
६८ तेन निर्वृत्तम्
६९ **तस्य** निवासः ७०
७० अदूरभवश्च
७१ ओरञ् ७६
७२ मतोश्च बह्वजङ्गात्
७३ बह्वचः कूपेषु ७४
७४ उदक्च विपाशः
७५ संकलादिभ्यश्च
७६ स्त्रीषु सौवीर-साल्व-प्राक्षु
७७ सुवास्त्वादिभ्योऽण् ७९
७८ रोणी
७९ कोपधाच्च
८० वुञ्-छण्-क-ठजिल-सेनि-र-ढञ्-
ण्य-य-फक्-फिञिञ्ञ्य-कक्-ठकोऽ-
रीहण-कृशाश्व-र्श्य-कुमुद-काश-तृण-
प्रेक्षा-श्म-सखि-संकाश-बल-पक्ष-
कर्ण-सुतङ्गम-प्रग-दिन्वराह-कुमुदा-
दिभ्यः (५)
८१ जनपदे **लुप्** ८३
८२ वरणादिभ्यश्च
८३ **शर्कराया** वा ८४
८४ ठक्-छौ च
८५ नद्यां **मतुप्** ८६
८६ मध्वादिभ्यश्च
८७ कुमुद-नड-वेतसेभ्यो ड्मतुप्
८८ नड-शादाड्ड्वलच्
८९ शिखाया वलच्

९० उत्करादिभ्यश्छः ९१
९१ नडादीनां कुक्च
९२ शेषे ( तस्य विकारः ४।३।१३४ इति यावत् । )
९३ राष्ट्रावारपाराद् घ-खौ
९४ ग्रामाद् य-खञौ
९५ कत्र्यादिभ्यो ढकञ् ९६
९६ कुल-कुक्षि-ग्रीवाभ्यः श्वास्यलंकारेषु
९७ नद्यादिभ्यो ढक्
९८ दक्षिणा-पश्चात्-पुरसस्त्यक्
९९ कापिश्याः ष्फक् १००
१०० रङ्कोरमनुष्येऽण् च (६)
१०१ द्युप्रागपागुदक्प्रतीचो यत्
१०२ कन्थायाष्ठक् १०३
१०३ वर्णौ वुक्
१०४ अव्ययात् त्यप् १०५
(वा०) अमेह-क्व-तसि-त्रेभ्य एव
(वा०) त्यब्नेर्ध्रुव इति वक्तव्यम्
(वा०) अरण्याण्णः
(वा०) दूरादेत्यः
१०५ ऐषमो-ह्यः-श्वसोऽन्यतरस्याम्
१०६ तीर-रूप्योत्तरपदादञ्-ञौ
१०७ दिक्पूर्वपदादसंज्ञायां ञः १०८
१०८ मद्रेभ्योऽञ् १०९
१०९ उदीच्य-ग्रामाच्च बह्वचोऽन्तोदात्तात्
११० प्रस्थोत्तरपद-पलद्यादि-कोपधादण् ११३
१११ कण्वादिभ्यो गोत्रे ११३
११२ इञश्च ११३
११३ न द्व्यचः प्राच्यभरतेषु
११४ वृद्धाच्छः ११८
११५ भवतष्ठक्-छसौ
११६ काश्यादिभ्यष्ठञ्-ञिठौ ११८
(वा०) आपदादिपूर्वपदात्कालान्तात्
११७ वाहीक-ग्रामेभ्यश्च
११८ विभाषोशीनरेषु
११९ ओर्देशे ठञ्
१२० वृद्धात् प्राचाम् (७) १२६
१२१ धन्व-योपधाद् वुञ् १३०
१२२ प्रस्थ-पुर-वहान्ताच्च
१२३ रोपधेतोः प्राचाम्
१२४ जनपद-तदवध्योश्च १२५
१२५ अवृद्धादपि बहुवचन-विषयात् १२६
१२६ कच्छाग्नि-वक्त्र-वर्तोत्तरपदात्
१२७ धूमादिभ्यश्च
१२८ नगरात्कुत्सन-प्रावीण्ययोः
१२९ अरण्यान्मनुष्ये
१३० विभाषा कुरु-युगन्धराभ्याम्
१३१ मद्र-वृज्योः कन्
१३२ कोपधादण् १३३
१३३ कच्छादिभ्यश्च १३४

---

९२ इतः पूर्वम् अपत्यादि चतुरर्थ्यन्तं समाप्तम् । इतः शैषिकाः, तस्य विकार इत्यर्थाधिकारः तृतीयपादान्तं यावत् ।

११९ ठञ्-ञिठप्रकरणे केवल-ठञ् नानुवर्तितुमर्हतीति ठञुपात्तोऽत्र ।

१३४ **मनुष्य-तत्स्थयोर्वुञ्** १३५,१३६
१३५ अपदातौ **साल्वात्** १३६
१३६ गो-यवाग्वोश्च
१३७ गर्तोत्तरपदाच्छः ४।३।१
१३८ **गहादिभ्यश्च**
( वा० ) कुग्जनस्य परस्य च
( वा० ) देवस्य च
( वा० ) स्वस्य च
( वा० ) वेणुकादिभ्यश्छण् वाच्यः
१३९ प्राचां कटादेः
१४० राज्ञः क च ( ८ )
१४१ **वृद्धाद**केकान्त-खोपधात् १४२
१४२ कन्था-पलद-नगर-ग्राम-ह्रदोत्तर-पदात्
१४३ **पर्वताच्च** १४४
१४४ विभाषाऽमनुष्ये
१४५ कृकण-पर्णाद्भारद्वाजे

तेन [१]सा[२]स्मिन्ठ[३]ञ् क्र[४]मादिभ्यो[५]जन-पदे[६]द्युप्रागपाग्[७]धन्व[८]वृद्धात्पञ्च ५ ॥

**इति पाणिनीयसूत्रपाठे चतुर्थस्याध्यायस्य द्वितीयः पादः ।**



## तृतीयः पादः

१ **युष्मदस्मदो**रन्यतरस्यां **खञ्** च ३
२ **तस्मिन्नणि** च युष्माकास्माकौ ३
३ तवक-ममकावेकवचने
४ **अर्हाद् यत्** ७।६
५ परावराधमोत्तम-पूर्वाच्च
६ **दिक्-पूर्वपदाट्ठञ्च** ७
७ ग्राम-जनपदैकदेशादञ्ठञौ
८ **मध्यान्मः** ९
( वा० ) आदेश्च । अवोधसोर्लोपश्च

---

१३६ साल्व-शब्दाद् वुञ् विधानात् साल्व-देशजा गौः विशिष्टा भातीति सूच्यते। गोशब्दस्य बहुधोपादानात् ४।३।१४३ सूत्रे मयटा ४।३।१६०; ५।१।२ सूत्रयोश्च यता प्रयोगद्वयनिर्माणाद् बहुत्र गोत्वसम्बन्धिप्रयोगबाहुल्याच्च प्रगाढा भक्तिर्गवि पाणिनेः प्रतीयते ।

१४१ अक + इक इत्यन्ते येषां ते च खोपधाच्च तेषां समाहार इत्यकेकान्त-खोपधम्, तस्मादित्यर्थः ।

१ शैषिका एव प्रत्ययाः 'तस्य विकारः ३-४-१३४' इत्यन्तम् । तत्र (११-२४) यावत् कालाधिकारः । ( २५-३७ ) जातार्थः । मध्येत्वनिश्चितः (४३-५२) कालात् । ( ५३-७३ ) तत्र भवः । ( ७४-८२ ) तत आगतः । तत इति ( ८४ ) यावत् । आगत इति ( ८२ ) यावत् । ( ८९-१०० ) 'सोऽस्य' । ( १०१-११५ ) प्रोक्तम् । ( ११६-११९ ) कृतम् । ( १२०-१३३ ) तस्येदम् । ( १३४-पादान्तम् ) तस्य विकारः प्राक् दीव्यतीयश्च ।

९ अ सांप्रतिके
१० द्वीपादनुसमुद्रं यञ्
११ **कालाट्ठञ्** २४।१५
१२ श्राद्धे शरदः १३
१३ **विभाषा** रोगातपयोः १५
१४ निशा-प्रदोषाभ्यां च
१५ श्वसस्तुट् च
१६ सन्धि-वेलाद्यृतु-नक्षत्रेभ्योऽण्
१७ प्रावृष एण्यः
१८ **वर्षाभ्यष्ठक्** १९
१९ **छन्दसि ठञ्** २१
२० वसन्ताच्च (१)
२१ **हेमन्ताच्च** २२
२२ सर्वत्राण् च तलोपश्च
२३ सायं-चिरं-प्राह्णे-प्रगेऽव्ययेभ्यष्ट्यु-ट्युलौ तुट् च २४
२४ विभाषा पूर्वाह्णापराह्णाभ्याम्
२५ **तत्र जातः** ५१,३७
२६ प्रावृषष्ठप्
२७ **संज्ञायां** शरदो वुञ् २८
२८ पूर्वाह्णापराह्णार्द्रा-मूल-प्रदोषाव-स्कराद् वुन् ३१
२९ पथः पन्थ च
३० **अमावास्याया** वा ३१
३१ अ च
३२ **सिन्ध्वपकराभ्यां** कन् ३३
३३ अणञौ च
३४ श्रविष्ठा-फल्गुन्यनुराधा-स्वाति-तिष्य-पुनर्वसु-हस्त-विशाखाऽषाढा-बहुलाल्लुक् ३७
३५ स्थानान्त-गोशाल-खरशालाच्च
३६ वत्सशालाभिजिदश्वयुक्छतभिषजो वा
३७ नक्षत्रेभ्यो बहुलम्
३८ कृत-लब्ध-क्रीत-कुशलाः
३९ **प्रायभवः** ४०
४० उपजानूपकर्णोपनीवेष्ठक् (२)
४१ **संभूते** ४३
४२ कोशाड्ढञ्
४३ **कालात्साधु**-पुष्प्यत्-पच्य-मानेषु ५०
४४ **उप्ते** च ४६
४५ आश्वयुज्या वुञ्
४६ ग्रीष्म-वसन्तादन्यतरस्याम्
४७ **देयमृणे** ५०
४८ कलाप्यश्वत्थ-यव-बुसाद्वुन्
४९ ग्रीष्मावरसमाद् **वुञ्**
५० संवत्सराग्रहायणीभ्यां ठञ्च
५१ व्याहरति मृगः
५२ तदस्य सोढम्
५३ **तत्र भवः** ७३
५४ दिगादिभ्यो **यत्** ५५
५५ शरीरावयवाच्च
५६ दृति-कुक्षि-कलशि-वस्त्यस्त्यहे-र्ढञ् ५७
५७ ग्रीवाभ्योऽण्च
५८ गम्भीराञ् ञ्यः ५९
(वा०) बहि-र्देव-पञ्चजनेभ्यश्च
५९ **अव्ययीभावाच्च** ६१
६० अन्तःपूर्वपदाट्ठञ् (३) ६१

(वा०) अध्यात्मादेश्च
६१ ग्रामात्पर्यनु-पूर्वात्
६२ जिह्वा-मूलाङ्गुलेश्छः ६३
६३ **वर्गान्ताच्च** ६४
६४ अशब्दे यत्-खावन्यतरस्याम्
६५ कर्ण-ललाटात्कनलंकारे
६६ **तस्य व्याख्यान** इति च **व्याख्यातव्यनाम्नः** ७३
६७ बह्वचोऽन्तोदात्ताट्ठञ्
६८ क्रतुयज्ञेभ्यश्च
६९ अध्यायेष्वेवर्षेः
७० पौरोडाश-पुरोडाशात्ष्ठन्
७१ छन्दसो यदणौ
७२ द्व्यजृद्-ब्राह्मणर्क्-प्रथमाध्वर-पुरश्च-रण-नामाख्याताट्ठक्
७३ अणृगयनादिभ्यः
७४ **तत आगतः** ८४,८२
७५ ठगायस्थानेभ्यः
७६ शुण्डिकादिभ्योऽण्
७७ **विद्या-योनि-संबन्धेभ्यो** वुञ् ७८
७८ ऋतष्ठञ् ७९
७९ पितुर्यच्च
८० गोत्रादङ्कवत् ( ४ )
८१ **हेतु-मनुष्येभ्योऽ**न्यतरस्यां रूप्यः ८२
८२ मयट् च
८३ **प्रभवति** ८४
८४ विदूराञ्ञ्यः
८५ **तद्**गच्छति पथि-दूतयोः ८८
८६ अभिनिष्क्रामति द्वारम्
८७ **अधिकृत्य कृते ग्रन्थे** ८८
८८ शिशुक्रन्द-यमसभ-द्वन्द्वेन्द्रजननादिभ्यश्छः
८९ **सोऽस्य** निवासः १००
९० **अभिजनश्च** ९४
९१ आयुधजीविभ्यश्छः पर्वते
९२ शण्डिकादिभ्यो ञ्यः
९३ सिन्धु-तक्षशिलादिभ्योऽणञौ
९४ तूदी-शलातुर-वर्मती-कूचवारा-ड्ढक्छण्ढञ्यकः
९५ **भक्तिः** १००
९६ अचित्तादद्देशकालाट्ठक्
९७ महाराजाट्ठञ्
९८ वासुदेवार्जुनाभ्यां वुन्
९९ गोत्र-क्षत्रियाख्येभ्यो बहुलं वुञ्
१०० जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने ( ५ )
१०१ **तेन प्रोक्तम्** १११
१०२ तित्तिरि-वरतन्तु-खण्डिकोखाच्छण्

६६ इतोऽष्टाशीतितमसूत्रान्तं प्रयोगेषु सौपः, तैङः, कार्तः, आख्यातिकः, नामिक इत्याद्युदाहरणतो ज्ञायते यदीदृशा ग्रन्थाः पूर्वमासन्निति ।
९४ शलातुर-नगराभिजनः पाणिनिरिति ऐतिहासिकाः ।
१०१ पाणिनिना प्रोक्तम् इत्यर्थे निष्पन्नं पाणिनीयमष्टकं कथं पाणिनि-कृतम् इति सुधीभिरवधेयम् । सूत्राणि च बहूनि प्राक्तनानि तत्र ।

१०३ काश्यप-कौशिकाभ्यामृषिभ्यां णिनिः १०६
१०४ कलापि-वैशम्पायनान्तेवासिभ्यश्च
१०५ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु
१०६ शौनकादिभ्यश्छन्दसि
१०७ कठ-चरकाल्लुक्
१०८ कलापिनोऽण्
१०९ छगलिनो ढिनुक्
११० पाराशर्य-शिलालिभ्यां भिक्षु-नट-सूत्रयोः १११
१११ कर्मन्द-कृशाश्वादिनिः
११२ तेनैकदिक् ११३,११४
११३ तसिश्च ११४
११४ उरसो यच्च
११५ उपज्ञाते
११६ कृते ग्रन्थे ११९
११७ संज्ञायाम् ११९
११८ कुलालादिभ्यो वुञ्
११९ क्षुद्रा-भ्रमर-वटर-पादपादञ्
१२० तस्येदम् ( ६ ) १३५
१२१ रथाद्यत् १२२
१२२ पत्रपूर्वादञ् १२३
१२३ पत्राध्वर्यु-परिषदश्च
१२४ हल-सीराट्ठक्
१२५ द्वन्द्वाद्वुन्वैर-मैथुनिकयोः
१२६ गोत्रचरणाद्वुञ्
१२७ सङ्घाङ्क-लक्षणेष्वञ्यञिञामण् १२८
१२८ शाकलाद्वा
१२९ छन्दोगौक्थिक-याज्ञिक-बह्वृच-नटाञ्ञ्यः
१३० न दण्ड-माणवान्तेवासिषु
१३१ रैवतिकादिभ्यश्छः
१३२ कौपिञ्जल-हास्तिपदादण् १३३
१३३ आथर्वणिकस्येकलोपश्च
१३४ तस्य विकारः (पादान्तम्) १६८
१३५ अवयवे च प्राण्योषधि-वृक्षेभ्यः १६८
१३६ बिल्वादिभ्योऽण् १४१
१३७ कोपधाच्च
१३८ त्रपु-जतुनोः षुक्
१३९ ओरञ् १४१
१४० अनुदात्तादेश्च ( ७ )
१४१ पलाशादिभ्यो वा
१४२ शम्याः ष्लञ्
१४३ मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः १५१,१४४
१४४ नित्यं वृद्ध-शरादिभ्यः
( वा० ) एकाचो नित्यम्
१४५ गोश्च पुरीषे
१४६ पिष्टाच्च १४७
१४७ संज्ञायां कन्
१४८ व्रीहेः पुरोडाशे
१४९ असंज्ञायां तिल-यवाभ्याम्
१५० द्व्यचश्छन्दसि १५१
१५१ नोत्वद्वर्ध्र-बिल्वात्
१५२ तालादिभ्योऽण् १५३
१५३ जातरूपेभ्यः परिमाणे
१५४ प्राणि-रजतादिभ्योऽञ् १५५

१५५ ञितश्च तत्प्रत्ययात्
१५६ क्रीतवत्परिमाणात्
१५७ उष्ट्राद् वुञ् १५८
१५८ उमोर्णयोर्वा
१५९ एण्या ढञ्
१६० गो-पयसोर्यत् (८) १६१
१६१ द्रोश्च १६२
१६२ माने वयः
१६३ फले लुक् १६५
१६४ प्लक्षादिभ्योऽण् १६५
१६५ जम्ब्वा वा १६६
१६६ लुप् च १६७
(वा०) फल-पाक-शुषामुपसंख्यानम्
(वा०) पुष्पमूलेषु बहुलम्
१६७ हरीतक्यादिभ्यश्च
१६८ कंसीय-परशव्ययोर्यञञौ लुक्च

[1]युष्मद्धे [2]मन्तासंभूते [3]ग्रामाद्धे [4][5]तुं-तेन [6]रथात् [7]पलाशादिभ्यो [8]द्रोश्चाष्टौ ८ ॥

**इति पाणिनीयसूत्रपाठे चतुर्थाध्यायस्य तृतीयः पादः ।**



## चतुर्थः पादः

१ प्राग्वहतेष्ठक् ७६
(वा०) गच्छतौ परदारादिभ्यः
२ तेन दीव्यति खनति जयति जितम् २७
३ संस्कृतम् ४
४ कुलत्थ-कोपधादण्
५ तरति ७
६ गोपुच्छाट्ठञ्
७ नौ-द्व्यचष्ठन्
८ चरति ११
९ आकर्षात्ष्ठल्
१० पर्पादिभ्यः ष्ठन् ११
११ श्वगणाट्ठञ्च
१२ वेतनादिभ्यो जीवति १४
१३ वस्न-क्रय-विक्रयाट्ठन् १४
१४ आयुधाच्छ च
१५ हरत्युत्सङ्गादिभ्यः १८
१६ भस्त्रादिभ्यः ष्ठन् १७
१७ विभाषा विवधात्
१८ अण्कुटिलिकायाः
१९ निर्वृत्तेऽक्षद्यूतादिभ्यः २१
२० क्त्रेर्मम् नित्यम् (१)
२१ अपमित्य-याचिताभ्यां कक्-कनौ
२२ संसृष्टे २५
२३ चूर्णादिनिः
२४ लवणाल्लुक्
२५ मुद्गादण्
२६ व्यञ्जनैरुपसिक्ते

---

१ तद् वहति रथ-युग-प्रासङ्गम् ४।४।७६ इत्यतः प्राक्तनेषु अर्थेषु ठक् अधिक्रियते। २८—प्रति-अनु इति उभयम् ईप, लोम, कूलेन प्रत्येकं सम्बध्नाति वर्तते इत्यर्थो ।



९ आकषादिति पाठान्तरम् ।

२७ ओजःसहोऽम्भसा वर्तते २९
२८ तत्प्रत्यनु-पूर्वमीप-लोम-कूलम् ४६
२९ परिमुखं च
३० प्रयच्छति गर्ह्यम् ३१
३१ कुसीद-दशैकादशात्ष्ठन्-ष्ठचौ
३२ उञ्छति
३३ रक्षति
३४ शब्द-दर्दुरं करोति
३५ पक्षि-मत्स्य-मृगान्हन्ति
३६ परिपन्थं च तिष्ठति
३७ माथोत्तरपद-पदव्यनुपदं धावति ३८
३८ आक्रन्दाट्ठञ्च
३९ पदोत्तरपदं गृह्णाति ४०
४० प्रतिकण्ठार्थ-ललामं च (२)
४१ धर्मं चरति
(वा०) अधर्माच्चेति वक्तव्यम्
४२ प्रतिपथमेति ठंश्च
४३ समवायान्समवैति ४५
४४ परिषदो ण्यः ४५
४५ सेनाया वा
४६ संज्ञायां ललाट-कुक्कुट्यौ पश्यति
४७ तस्य धर्म्यम् ५०,४९
४८ अण्महिष्यादिभ्यः
४९ ऋतोऽञ्
५० अवक्रयः
५१ तदस्य पण्यम् ६५,५४
५२ लवणाट्ठञ्
५३ किसरादिभ्यः ष्ठन् ५४
५४ शलालुनोऽन्यतरस्याम्
५५ शिल्पम्
५६ मड्डुक-झर्झरादणन्यतरस्याम्
५७ प्रहरणम् ५९
५८ परश्वधाट्ठञ् च
५९ शक्ति-यष्ट्योरीकक्
६० अस्ति-नास्ति-दिष्टं मतिः (३)
६१ शीलम् ६२
६२ छत्रादिभ्यो णः
६३ कर्माध्ययने वृत्तम् ६४
६४ बह्वच्पूर्वपदाट्ठच्
६५ हितं भक्षाः
६६ तदस्मै दीयते नियुक्तम् ६८
६७ श्राणा-मांसौदनाट्टिठन्
६८ भक्तादणन्यतरस्याम्
६९ तत्र नियुक्तः ७४,७०
७० अगारान्ताट्ठन्
७१ अध्यायिन्यदेशकालात्
७२ कठिनान्त-प्रस्तार-संस्थानेषु व्यवहरति
७३ निकटे वसति ७४
७४ आवसथात् ष्ठल्
७५ प्राग्घिताद्यत् ५।१।५
७६ तद्वहति रथ-युग-प्रासङ्गम् ८६,८२
७७ धुरो यड्-ढकौ

३५ पक्षि-मत्स्य-मृगान् हन्ति, परिपन्थं च तिष्ठति।
व्रातेन जीवत्यधुना, न वक्षः पूर्ववत् मनः॥ (इति सूत्रपद्य प्रसिद्धम्)
७५ तस्मै हितम् ५।१।५ इत्यतः प्राक्तनेषु अर्थेषु यत् अधिक्रियते।

७८ खः सर्वधुरात् ७९
७९ एकधुराल्लुक्च
८० शकटादण् (४)
८१ हल-सीराट्ठक्
८२ संज्ञायां जन्याः
८३ विध्यत्यधनुषा
८४ धन-गणं लब्धा ८५
८५ अन्नाण्णः
८६ वशं गतः
८७ पदमस्मिन् दृश्यम्
८८ मूलमस्यावर्हि
८९ संज्ञायां धेनुष्या
९० गृहपतिना संयुक्ते ञ्यः
९१ नौ-वयो-धर्म-विष-मूल-मूल-सीता-तुलाभ्यस्तार्य-तुल्य-प्राप्य-वध्या-नाम्य-सम-समित-संमितेषु
९२ धर्म-पथ्यर्थ-न्यायादनपेते
९३ छन्दसो **निर्मिते** ९४
९४ उरसोऽण् च
९५ **हृदयस्य** प्रियः ९६
९६ वन्धने चर्षौ
९७ मत-जन-हलात् करण-जल्प-कर्षेषु
९८ **तत्र साधुः** ११९,१०६
९९ प्रतिजनादिभ्यः खञ्
१०० भक्ताण्णः (५)
१०१ परिषदो ण्यः
१०२ कथादिभ्यष्ठक्
१०३ गुडादिभ्यष्ठञ्
१०४ पथ्यतिथि-वसति-स्वपतेर्ढञ्
१०५ **सभाया** यः १०६
१०६ ढश्छन्दसि
१०७ समानतीर्थे वासी
१०८ **समानोदरे शयित** ओ चोदात्तः १०९
१०९ सोदराद्यः
११० **भवे छन्दसि** ११८,१४४
१११ पाथो-नदीभ्यां डचण्
११२ वेशन्त-हिमवद्भ्यामण्
११३ स्रोतसो विभाषा डचड्डचौ
११४ सगर्भ-सयूथ-सनुताद्यन्
११५ तुग्राद् घन्
११६ **अग्राद्यत्** ११७
११७ घच्छौ च
११८ समुद्राभ्राद् घः
११९ बर्हिषि दत्तम्
१२० दूतस्य भाग-कर्मणी (६)
१२१ रक्षो-यातूनां हननी
१२२ रेवती-जगती-हविष्याभ्यः प्रशस्ये
१२३ **असुरस्य** स्वम् १२४
१२४ मायायामण्
१२५ **तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक्च मतोः** १२६

---

८४ लब्धा इति तृन्नन्तं रूपम् ।
१०१ 'णोऽपीष्यते' इति पारिषदः ।
११० भवार्थे छन्दसि प्रत्यया लोकेऽपि क्वचित् प्रयुज्यन्ते भाष्यनिदर्शनात् ।
११८ छभ्र—समुद्रीयम् । अभ्रीयम् ।

१२६ अश्विमानण्
१२७ वयस्यासु मूर्ध्नो मतुप्
१२८ मत्वर्थे मास-तन्वोः १३२
१२९ मधोर्ञ च
१३० ओजसोऽहनि यत्खौ
१३१ वेशोयशआदेर्भगाद्यल् १३२
१३२ ख च १३३
१३३ पूर्वैः कृतमिनि-यौ च
१३४ अद्भिः संस्कृतम्
१३५ सहस्रेण संमितौ घः १३६
१३६ मतौ च
१३७ सोममर्हति यः १३
१३८ मये च १४
१३९ मधोः
१४० वसोः समूहे च (७
१४१ नक्षत्राद् घः
१४२ सर्वदेवात् तातिल् १४
१४३ शिव-शमरिष्टस्य करे १४
१४४ भावे च

[१]प्रागवहतेर[२]पमित्य[३]धर्म[४]शील[५] हल[६] परिषदो[७]रक्षो[८]नक्षत्राच्चत्वारि॥

इति पाणिनीयसूत्रपाठे चतुर्थाध्यायस्य चतुर्थः पादः ।

१२९ 'लुकाभेदा रोकाच्चेति वाच्यम्' । मधुः । इषः । ऊर्जः । शुचिः । शुक्रः
( सर्वे मासाः ) ।

# अथ पञ्चमोऽध्यायः

## प्रथमः पादः

१ प्राक् क्रीताच्छः ३६
२ उ-गवादिभ्यो यत् ४
(वा०) शुनः सम्प्रसारणं वा च दीर्घत्वम् ।
३ कम्बलाच्च संज्ञायाम्
४ विभाषा हविरपूपादिभ्यः
५ **तस्मै हितम्** ११
६ शरीरावयवाद्यत् ७
७ खल-यव-माष-तिल-वृष-ब्रह्मणश्च
८ अजाविभ्यां थ्यन्
९ आत्मन्-विश्वजन-भोगोत्तरपदात्ख
(वा०) सर्वजनाट्ठञ् खश्च
१० सर्व-पुरुषाभ्यां ण-ढञौ
११ माणव-चरकाभ्यां खञ्
१२ **तदर्थं विकृतेः प्रकृतौ** १५
१३ छदिरुपधि-बलेर्ढञ्
१४ ऋषभोपानहोर्ञ्यः
१५ चर्मणोऽञ्
१६ **तदस्य तदस्मिन् स्यादिति** १७
१७ परिखाया ढञ्
१८ प्राग्वतेष्ठञ् ११५
१९ आर्हादगोपुच्छ-संख्या-परिमाणा-ट्ठक् ६५
२० असमासे निष्कादिभ्यः (१)
२१ शताच्च ठन्-यतावशते
२२ संख्याया अतिशदन्तायाः **कन्** २३
२३ वतोरिड् वा
२४ विंशति-त्रिंशद्भ्यां ड्वुन्नसंज्ञायाम्
२५ कंसाट्टिठन्
२६ शूर्पादञन्यतरस्याम्
२७ शतमान-विंशतिक-सहस्र-वसनादण्
२८ **अध्यर्धपूर्व-द्विगोर्लुग्-संज्ञायाम्** ३५,३१
२९ **विभाषा** कार्षापण-सहस्राभ्याम् ३१
३० **द्वि-त्रिपूर्वान्निष्कात्** ३१
३१ बिस्ताच्च
३२ विंशतिकात्खः

---

१ 'तेन क्रीतम्' ५–१–३७ इत्यतः प्राक्तनार्थेषु छ-यतोरधिकारः सहैव चलति । ( इतः पूर्वं चतुरध्यायान्ता काशिकावृत्तिर्जयादित्यस्य, इत एव वामनस्य । कथमयं विभाग इति न ज्ञायते । उभयोः सर्ववृत्तित्वात् )

१८ इतः 'तेन तुल्यं क्रिया चेद्वतिः ५–१–११५' इत्यतः प्राक्तनेष्वर्थेषु ठञ् चलति । मध्ये-मध्ये तदपवादकाः ठगादयोऽपि ।

१९ 'तदर्हति ५-१-६३' यावत् सर्वार्थेषु ठक् बोध्यः । गोपुच्छादिषु ठञ् । स्वरे भेदः ।

३३ खार्या ईकन्
३४ पण-पाद-माष-शताद् **यत्** ३६
३५ **शाणाद्वा** ३६
३६ द्वि-त्रिपूर्वादण्च
३७ तेन क्रीतम्
३८ **तस्य निमित्तं संयोगोत्पातौ** ४१
३९ गो-द्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् ४०
४० पुत्राच्छ च ( २ )
४१ **सर्वभूमि-पृथिवीभ्यामणञौ** ४३
४२ तस्येश्वरः
४३ **तत्र विदित** इति च ४४
४४ लोक-सर्वलोकाट्ठञ्
४५ **तस्य वापः** ४६
४६ पात्रात् ष्ठन्
४७ **तदस्मिन् वृद्ध्याय-लाभ-शुल्कोपदा दीयते** ४९
४८ पूरणार्द्धाट्ठन् ४९
४९ भागाद्यच्च
५० **तद्धरति वहत्यावहति** भाराद्वंशादिभ्यः ५५,५१
५१ वस्न-द्रव्याभ्यां ठन्-कनौ
५२ **संभवत्यवहरति पचति** ५५
५३ **आढकाचित-पात्रात्** खोऽन्यतरस्याम् ५४
५४ द्विगोः ष्ठंश्च ५५
५५ कुलिजाल्लुक्-खौ च
५६ सोऽस्यांश-वस्न-भृतयः
५७ **तदस्य परिमाणम्** ६
५८ संख्यायाः संज्ञा-संघ-सूत्राध्ययनेषु
५९ पंक्ति-विंशति-त्रिंशच्चत्वारिंशत्-पञ्चाशत्-षष्टि-सप्तत्यशीति-नवति-शतम्
६० पञ्चद्दशतौ **वर्गे** वा ( ३ ) ६१
६१ सप्तनोऽञ् छन्दसि
६२ त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण्
६३ **तदर्हति** ७६,७१
६४ छेदादिभ्यो **नित्यम्** ६५
६५ शीर्षच्छेदाद् **यच्च** ७
६६ दण्डादिभ्यो यः
६७ छन्दसि च
६८ पात्राद् घंश्च
६९ कडङ्कर-दक्षिणाच्छ च
७० स्थालीबिलात्
७१ यज्ञर्त्विग्भ्यां घ-खञौ
७२ पारायण-तुरायण-चान्द्रायणं वर्तयति
७३ संशयमापन्नः
७४ योजनं **गच्छति** ७
७५ **पथः** ष्कन् ७६
७६ पन्थो ण नित्यम्

---

५३ आढक + आचित पात्रात् इति च्छेदः ।
५८ संज्ञा, संघः, सूत्रम्, अध्ययनम् इति च्छेदः ।
६४ नित्यमिति क्रिययाऽभ्येति न तु प्रत्ययेन । छेदं नित्यमर्हति छैदिकः ठञ् ।
७१ आर्हीयाः समाप्ताः । प्राग्वतीयाः चलन्ति । तत्रोत्सर्गः ठञ् ।

७७ उत्तरपथेनाहृतं च
७८ **कालात्** ९७
७९ तेन निर्वृत्तम्
८० तमधीष्टो भृतो भूतो भावी (४)
८१ **मासाद्वयसि** यत्-खञौ ८९,८३
८२ द्विगोर्यप् ८३
८३ **षण्मासाण्ण्यच्च** ८४
८४ अवयसि ठंश्च
८५ **सभायाः खः** ८६,८८
८६ **द्विगोर्वा** ८९,८८
८७ रात्र्यहः-संवत्सराच्च
८८ **वर्षाल्लुक्च** ८९
८९ चित्तवति नित्यम्
९० षष्टिकाः षष्टिरात्रेण पच्यन्ते
९१ **वत्सरान्ताच्छश्छन्दसि** ९२
९२ सं-परिपूर्वात्ख च
९३ तेन परिजय्य-लभ्य-कार्य-सुकरम्
९४ तदस्य ब्रह्मचर्यम्
९५ तस्य च दक्षिणा यज्ञाख्येभ्यः
९६ **तत्र च दीयते कार्यं** भववत् ९७,९८
९७ व्युष्टादिभ्योऽण्
९८ तेन यथाकथाच-हस्ताभ्यां ण-यतौ
९९ **संपादिनि** १००
१०० कर्मवेषाद्यत् (५)
१०१ **तस्मै प्रभवति** संतापादिभ्यः १०३
१०२ योगाद्यच्च
१०३ कर्मण उकञ्
१०४ **समयस्तदस्य प्राप्तम्** ११४,१०७
१०५ **ऋतोरण्** १०६
१०६ छन्दसि घस्
१०७ **कालाद्यत्** १०८
१०८ प्रकृष्टे ठञ्
१०९ **प्रयोजनम्** ११४
११० विशाखाषाढादण् मन्थ-दण्डयोः
१११ अनुप्रवचनादिभ्यश्छः ११२
११२ समापनात् सपूर्वपदात्
११३ ऐकागारिकट् चौरे
११४ आकालिकडाद्यन्त-वचने
११५ तेन तुल्यं क्रिया चेद्वतिः ११८
११६ तत्र तस्येव
११७ तदर्हम्
११८ उपसर्गाच्छन्दसि धात्वर्थे
११९ **तस्य भावस्त्व-तलौ** १३६
१२० **आ च त्वात्** १३६ (६)
१२१ न नञ्पूर्वात्तत्पुरुषादचतुर-संगत-लवण-वट-युध-कत-रस-लसेभ्यः

---

७७ चकारात् 'तेन गच्छति' औत्तरपथिको दूतः ।
७८ 'व्युष्टादिभ्योऽण् ५-१-९७' इति-यावत् काल-वाचिनः प्रत्ययाः ।
९८ यथाकथाच इत्यव्ययसंघोऽनादरार्थकः । इतः पूर्वं समासः कालाधिकारः ।
११५ ठञ् समास आकालिकट् इति सूत्रान्तम् ।
११९ इतो भावकर्माधिकारः चलति पादान्तम् ।
१२० 'ब्रह्मणस्त्वः ५-१-१३६' इति यावत् अपवादैः सह त्वतलावपि स्याताम्, नञ्स्नञ्भ्याम् च ।

१२२ पृथ्वादिभ्य इमनिज्वा १२३

१२३ वर्ण-दृढादिभ्यः ष्यञ्च १२४

१२४ गुणवचन-ब्राह्मणादिभ्यः कर्मणि च १३६

(वा०) चातुर्वर्ण्यादीनां स्वार्थं उपसंख्यानम्

१२५ स्तेनाद्यन्नलोपश्च

१२६ सख्युर्यः

१२७ कपि-ज्ञात्योर्ढक्

१२८ पत्यन्त-पुरोहितादिभ्यो यक्

१२९ प्राणभृज्जाति-वयो-वचनोद्गात्रादिभ्योऽञ्

१३० हायनान्त-युवादिभ्योऽण् १३१

१३१ इगन्ताच्च लघुपूर्वात्

१३२ योपधाद् गुरूपोत्तमाद् वुञ् १३५

(वा०) सहायाद् वा

१३३ द्वन्द्व-मनोज्ञादिभ्यश्च

१३४ गोत्र-चरणाच्छ्लाघात्याकारतदवेतेषु

१३५ होत्राभ्यश्छः

१३६ ब्रह्मणस्त्वः

[1]प्राक्क्रीता[2]च्छाच्च[3]सर्वभूमि[4]सप्तनो-
ऽञ्[5]मासात् [6]तस्मै प्रभवति न[7]
नञ्पूर्वात्षोडश ॥

**इति पाणिनीयसूत्रपाठे पञ्चमाध्यायस्य प्रथमः पादः ।**

## द्वितीयः पादः

१ धान्यानां भवने क्षेत्रे खञ् ४

२ व्रीहि-शाल्योर्ढक्

३ यव-यवक-षष्टिकाद्यत् ४

४ विभाषा तिल-माषोमा-भङ्गाणुभ

५ सर्वचर्मणः कृतः ख-खञौ

६ यथामुख-संमुखस्य दर्शनः खः १५

७ तत् सर्वादेः पथ्यङ्ग-कर्म-पत्र-पात्रं व्याप्नोति २७

८ आप्रपदं प्राप्नोति

९ अनुपद-सर्वान्नायानयं बद्धा-भक्षयति-नेयेषु

१० परोवर-परम्पर-पुत्रपौत्रमनुभवति

११ अवार-पारात्यन्तानुकामं गामी

१२ समांसमां विजायते १३

१३ अद्यश्वीनाऽवष्टब्धे

१४ आगवीनः

१५ अनुग्वलंगामी १७

१६ अध्वनो यत्-खौ १७

१७ अभ्यमित्राच्छ च

१८ गोष्ठात्खञ् भूतपूर्वे २३

१९ अश्वस्यैकाहगमः

२० शालीन-कौपीने अधृष्टाकार्ययोः

२१ व्रातेन जीवति (१)

२२ साप्तपदीनं सख्यम्

२३ हैयङ्गवीनं संज्ञायाम्

---

१ समासः नञस्नञधिकारः [illegible] ।



२ 'यथामुखीनः सीताया हेमरत्नमयो मृगः' इति भट्टिः ५–४९ । तद्धितो-

२४ **तस्य पाकमूले** पीत्वादि-कर्णा-
दिभ्यः कुणव्-जाहचौ २५
२५ पक्षात्तिः
२६ तेन वित्तश्चुञ्चुप्-चणपौ
२७ वि-नञ्भ्यां ना नाञौ न सह
२८ **वेः** शालच्छङ्कटचौ २९
२९ संप्रोदश्च **कटच्** ३०
(वा०) विकारे स्नेहने तैलच्
३० **अवात्कुटारच्च**
३१ **नते नासिकायाःसंज्ञायां** टीटञ्-
नाटज्-भ्रटचः ३३,३४
३२ **नेर्बिडज्**-विरीसचौ ३३
३३ इनच्-पिटच्-चिक-चि च
३४ उपाधिभ्यां त्यकन्नासन्नारूढयोः
३५ कर्मणि घटोऽठच्
३६ **तदस्य** संजातं तारकादिभ्य
इतच् ३८
३७ **प्रमाणे द्वयसज्-दघ्नञ्-मात्र-
चः** ३८
३८ पुरुष-हस्तिभ्यामण्च
३९ यत्-तदेतेभ्यः परिमाणे **वतुप्** ४१
४० किमिदम्भ्यां **वो घः** ४१
४१ किमः संख्या-परिमाणे डति च
४२ संख्याया अवयवे तयप्
४३ द्वि-त्रिभ्यां **तयस्यायज्वा** ४४
४४ उभादुदात्तो नित्यम्
४५ **तदस्मिन्नधिकमिति**
दशान्ताड्डः ४६
४६ शदन्त-विंशतेश्च
४७ **संख्याया** गुणस्य निमाने मयट् ५८
४८ **तस्य पूरणे डट्** ५८,५३
४९ **नान्तादसंख्यादेर्मट्** ५०
५० थट् च च्छन्दसि
५१ षट्-कति-कतिपय-चतुरां थुक्
५२ बहु-पूग-गण-सङ्घस्य तिथुक्
५३ वतोरिथुक्
५४ **द्वेस्तीयः** ५५
५५ त्रेः संप्रसारणं च
५६ विंशत्यादिभ्यस्**तमडन्यतर-
स्याम्** ५८
५७ नित्यं शतादि-मासार्ध-मास-
संवत्सराच्च
५८ षष्टयादेश्चासंख्यादेः
५९ **मतौ छः** सूक्त-साम्नोः ६२
६० **अध्यायानुवाकयोर्लुक्** (२) ६५
६१ विमुक्तादिभ्योऽण्
६२ गोषदादिभ्यो **वुन्** ६३
६३ **तत्र कुशलः** पथः ६७,६४
६४ आकर्षादिभ्यः **कन्** ८२
६५ धन-हिरण्यात्कामे
६६ स्वाङ्गेभ्यः **प्रसिते** ६७
६७ उदराट्ठगाद्यूने
६८ सस्येन परिजातः
६९ अंशं हारी
७० तन्त्रादचिरापहृते
७१ ब्राह्मणकोष्णिके संज्ञायाम्

---

दाहरणानि भट्टिकाव्यस्य प्रकीर्ण-काण्डे (१–५ सर्गस्य षण्णवति-पद्या-
न्तम्) दृशेलिमानि । २९ चकाराद् विकटः । निकटः ।

७२ शीतोष्णाभ्यां कारिणि
७३ अधिकम्
७४ अनुकाभिकाभीकः कमिता
७५ पार्श्वेनान्विच्छति ७६
७६ अयःशूल-दण्डाजिनाभ्यां ठक्-ठञौ
७७ तावतिथं ग्रहणमिति लुग्वा
७८ स एषां ग्रामणीः
७९ शृङ्खलमस्य बन्धनं करभे
८० उत्क उन्मनाः (४)
८१ काल-प्रयोजनाद्रोगे
८२ **तदस्मिन्नन्नं प्राये संज्ञायाम्** ८३
८३ कुल्माषादञ्
८४ श्रोत्रियंश्छन्दोऽधीते
८५ **श्राद्धमनेन** भुक्तमिनि-ठनौ ८८
८६ **पूर्वादिनिः** ८७, ९१
८७ सपूर्वाच्च
८८ इष्टादिभ्यश्च
८९ छन्दसि परिपन्थि-परिपरिणौ पर्यवस्थातरि
९० अनुपद्यन्वेष्टा
९१ साक्षाद्द्रष्टरि संज्ञायाम्
९२ क्षेत्रियच् परक्षेत्रे चिकित्स्यः
९३ इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा
९४ **तदस्यास्त्यस्मिन्निति मतुप्** १४०
९५ रसादिभ्यश्च
९६ प्राणिस्थादातो **लजन्यतरस्याम्** ९७
९७ सिध्मादिभ्यश्च
९८ वत्सांसाभ्यां काम-बले
९९ फेनादिलच्च
१०० लोमादि-पामादि-पिच्छादिभ्यः शनेलचः (५)
१०१ प्रज्ञा-श्रद्धार्चाभ्यो णः
१०२ **तपःसहस्राभ्यां** विनीनी १०३
१०३ **अण्** च १०५
१०४ **सिकता-शर्कराभ्यां च** १०५
१०५ देशे लुबिलचौ च
१०६ दन्त उन्नत उरच्
१०७ ऊष-सुषि-मुष्क-मधो रः
(वा०) रप्रकरणे ख-मुख-कुञ्जेभ्य उपसंख्यानम्
१०८ द्यु-द्रुभ्यां मः
१०९ केशाद्वोऽन्यतरस्याम् ११०
११० गाण्ड्यजगात्संज्ञायाम्
१११ काण्डाण्डादीरन्नीरचौ
११२ रजः-कृष्यासुति-परिषदो-**वलच्** ११३

---

९४ मत्वर्थीया इतः पादान्ताः चलन्ति। भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्ति-विवक्षायां भवन्ति मतुबादयः॥
११२ 'परिषद्' शब्देन पर्षदोऽपि ग्रहणम् 'एकदेश-विकृतमनन्यवदिति' परिभाषया। तथाहि—पर्षद्वलान् महाब्रह्मैराट नैकटिकाश्रमान् (इति भट्टिः)। 'पर्षद्'-शब्दनिर्मितिः 'पृषोदरादीनि यथोपदिष्टम्' ६।३।१०८ निपातनात्।

(वा०) अन्येभ्योऽपि दृश्यते
११३ दन्त-शिखात्संज्ञायाम् ११४
११४ ज्योत्स्ना-तमिस्रा-शृङ्गि-णोर्जस्विन्नूर्जस्वल-गोमिन्-मलिन-मलीमसाः
११५ अत इनि-ठनौ ११७
११६ व्रीह्यादिभ्यश्च
११७ तुन्दादिभ्य इलच्च
११८ एक-गो-पूर्वाट्ठञ् नित्यम् ११९
११९ शत-सहस्रान्ताच्च निष्कात्
१२० रूपादाहत-प्रशंसयोर्यप् (६)
१२१ अस्-माया-मेधा-स्रजो विनिः १२२
१२२ बहुलं छन्दसि
१२३ ऊर्णाया युस्
१२४ वाचो ग्मिनिः १२५
१२५ आलजाटचौ बहुभाषिणि
१२६ स्वामिन्नैश्वर्ये
१२७ अर्शआदिभ्योऽच्
१२८ द्वन्द्वोपताप-गर्ह्यात्प्राणिस्था-दिनिः १३७
१२९ वातातीसाराभ्यां कुक्च
१३० वयसि पूरणात्
१३१ सुखादिभ्यश्च
१३२ धर्मशील-वर्णान्ताच्च
१३३ हस्ताज्जातौ
१३४ वर्णाद् ब्रह्मचारिणि
१३५ पुष्करादिभ्यो देशे
(वा०) अर्थाच्चासन्निहिते
(वा०) तदन्ताच्चेति वक्तव्यम्
१३६ बलादिभ्यो मतुवन्यतरस्याम्
१३७ संज्ञायां मन्-माभ्याम्
१३८ कं-शंभ्यां ब-भ-युस्-ति-तु-त-यसः
१३९ तुन्दि-बलि-वटेर्भः
१४० अहं-शुभमोर्युस्

[1]धान्यानां [2]व्रातेन कि[3] मो वि[4] मुक्तादिभ्यः [5]कालप्रयोजनात्प्र[6]-ज्ञाश्रद्धा[7]स्मायामेधा विंशतिः ।

इति पाणिनीयसूत्रपाठे पञ्चमाध्यायस्य द्वितीयः पादः ।



## तृतीयः पादः

१ प्राग्दिशो विभक्तिः २६
२ किं-सर्वनाम-बहुभ्योऽद्व्या-दिभ्यः २७
३ इदम इश् ४
४ एतेतौ रथोः
५ एतदोऽन्
६ सर्वस्य सोऽन्यतरस्यां दि
७ पञ्चम्यास्तसिल् ९

१ स्वार्थिकाः प्रत्ययाः प्रारभ्यन्ते । दिक्छब्देभ्यः ५।३।२७ प्राग्विभक्तिसंज्ञा । त्यदाद्यत्वादि प्रयोजनम् । समर्थानां प्रथमादिति निवृत्तम्, 'वा' चलति ।
५ एतदोऽश् इति पाठान्तरम् । योगविभागोऽप्यत्र सर्वसम्मतस्तेन 'एतर्हि' इति प्रयोगोऽपि । अन् अनेकालादेशः । 'नलोपः प्रातिपदिकान्तस्य ८।२।७' नलोपः ।

८ तसेश्च
९ पर्यभिभ्यां च
१० सप्तम्यास्त्रल् २२
११ इदमो हः
१२ किमोऽत् १३
१३ वा ह च च्छन्दसि
१४ इतराभ्योऽपि दृश्यन्ते
१५ सर्वैकान्य-किं-यत्-तदः काले दा २२
१६ इदमो र्हिल् १८
१७ अधुना
१८ दानीं च १९
१९ तदो दा च
२० तयोर्दा-र्हिलौ च च्छन्दसि (१)
२१ अनद्यतने र्हिलन्यतरस्याम्
२२ सद्यः-परुत्-परार्यैषमः-परेद्यव्यद्य-पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युर-परेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः
२३ प्रकारवचने थाल् २६
२४ इदमस्थमुः २५
२५ किमश्च २६
२६ था हेतौ च च्छन्दसि
२७ दिक्शब्देभ्यः सप्तमी-पञ्चमी-प्रथमाभ्यो दिग्देश-कालेष्व-स्तातिः ४१
२८ दक्षिणोत्तराभ्यामतसुच् २९,
२९ विभाषा परावराभ्याम्
३० अञ्चेर्लुक्
३१ उपर्युपरिष्टात्
३२ पश्चात्
३३ पश्च पश्चा च च्छन्दसि
३४ उत्तराधर-दक्षिणादातिः
३५ एनबन्यतरस्यामदूरेऽपञ्चम्याः
३६ दक्षिणादाच् ३७,३८
३७ आहि च दूरे ३८
३८ उत्तराच्च
३९ पूर्वाधरावराणामसिपुरधव-श्चैषाम् ४०
४० अस्ताति च (२) ४१
४१ विभाषाऽवरस्य
४२ संख्याया विधार्थे धा ४३,४६
४३ अधिकरणविचाले च
४४ एकाद्धो ध्यमुञन्यतरस्याम् ४६
४५ द्वि-त्र्योश्च धमुञ् ४६
४६ एधाच्च
४७ याप्ये पाशप्
४८ पूरणाद् भागे तीयादन् ४९,५१,५१
४९ प्रागेकादशभ्योऽच्छन्दसि ५०
५० षष्ठाष्टमाभ्यां ञ च ५१
५१ मान-पश्वङ्गयोः कन्-लुकौ च ५२
५२ एकादाकिनिच्चासहाये
५३ भूतपूर्वे चरट् ५४
५४ षष्ठ्या रूप्य च
५५ अतिशायने तमबिष्ठनौ ५७,५६
५६ तिङश्च ७१
५७ द्विवचन-विभज्योपपदे तरबीयसुनौ
५८ अजादी गुणवचनादेव ६५
५९ तुश्छन्दसि



२७ संख्याया विधार्थे धा ५।३।४२ इत्यतः प्राक् अस्तातिविषये विधिः ।

६० **प्रशस्यस्य** श्रः ( ३ ) ६१
६१ **ज्य** च
६२ **वृद्धस्य** च
६३ अन्तिक-बाढयोर्नेद-साधौ
६४ युवाल्पयोः कनन्यतरस्याम्
६५ विन्-मतोर्लुक्
६६ प्रशंसायां रूपप्
६७ **ईषदसमाप्तौ** कल्पव्-देश्य-देशीयरः ६८
६८ विभाषा सुपो बहुच्पुरस्तात्तु ६९
६९ प्रकारवचने जातीयर्
७० प्रागिवात्कः ९६
७१ अव्यय-सर्वनाम्नामकच्प्राक्टेः ७२
७२ कस्य च दः
७३ अज्ञाते
७४ **कुत्सिते** ७५
७५ संज्ञायां कन्
७६ **अनुकम्पायाम्** ८२
७७ **नीतौ च तद्युक्तात्** ८१,८०
७८ **बह्वचो मनुष्यनाम्नष्ठज्वा** ८०,८२,८०
७९ **घनिलचौ** च ८०
८० प्राचामुपादेरडज्वुचौ च ( ४ )
८१ जातिनाम्नः **कन्** ८२
८२ अजिनान्तस्योत्तरपदलोपश्च ८४
८३ **ठाजादावूर्ध्वं** द्वितीयादचः ८४
८४ शेवल-सुपरि-विशाल-वरुणार्यमा-दीनां तृतीयात्
८५ अल्पे
८६ **ह्रस्वे** ८७
८७ संज्ञायां कन्
८८ कुटी-शमी-शुण्डाभ्यो रः
८९ कुत्वा डुपच्
९० कासू-गोणीभ्यां ष्टरच् ९१
९१ वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे
९२ **किं यत्-तदो-र्निर्धारणे द्वयोरेकस्य डतरच्** ९३,९४
९३ वा बहूनां जातिपरिप्रश्ने **डतमच्** ९४
९४ एकाच्च प्राचाम्
९५ अवक्षेपणे **कन्** १००
९६ **इवे प्रतिकृतौ** १११,१००
९७ **संज्ञायां** च १००
९८ **लुम्मनुष्ये** १००
९९ जीवकार्थे चापण्ये
१०० देवपथादिभ्यश्च ( ५ )
१०१ वस्तेर्ढञ्
१०२ शिलाया ढः
१०३ शाखादिभ्यो **यः**
१०४ द्रव्यं च भव्ये
१०५ कुशाग्राच्छः १०६
१०६ समासाच्च तद्विषयात्

---

७० 'इवे प्रतिकृतौ ५।३।९६' इत्यतः प्राक् कप्रत्ययाधिकारः ।
८३ चतुर्थादनजादौ च लोपः पूर्वपदस्य च। अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च॥
९६ को गतः, कन् चलति १११ यावत्

१०७ शर्करादिभ्योऽण्
१०८ अङ्गुल्यादिभ्यष्ठक् १०९
१०९ एकशालायाष्ठजन्यतरस्याम्
११० कर्क-लोहितादीकक्
१११ प्रत्न-पूर्व-विश्वेमात्थाल्छन्दसि
११२ पूगाञ्ञ्योऽग्रामणीपूर्वात् ११३
११३ व्रात-च्फञोरस्त्रियाम्
११४ आयुधजीवि-सङ्घाञ्ञ्यड्-वाहीकेष्वब्राह्मण-राजन्यात् ११७
११५ वृकाट्टेण्यण्
११६ दामन्यादि-त्रिगर्त-षष्ठाच्छः
११७ पर्श्वादि-यौधेयादिभ्योऽणञौ
११८ अभिजिद्-विदभृच्छालावच्छि-खावच्छमीवदूर्णावच्छ्रुमदणो यञ्
११९ ञ्यादयस्तद्राजाः

[1]प्राग्दिशोऽ[2]नद्यतने वि[3]भाषा ज्य[4] च [5]जातिनाम्नो [6]वस्तेरेकोनविंशतिः ।

इति पाणिनीयसूत्रपाठे पञ्चमाध्यायस्य तृतीयः पादः ।

## चतुर्थः पादः

१ पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च २
२ दण्ड-व्यवसर्गयोश्च
३ स्थूलादिभ्यः प्रकारवचने कन् ६
४ अनत्यन्तगतौ क्तात् ५
५ न सामिवचने
६ वृहत्या आच्छादने
७ अषडक्षाशितङ्ग्वलंकर्मालंपुरुषाऽध्युत्तरपदात् खः ८
८ विभाषाञ्चेरदिक्स्त्रियाम्
९ जात्यन्ताच्छ बन्धुनि १०
१० स्थानान्ताद्विभाषा सस्थानेनेति चेत्
११ किमेत्तिङव्ययघादाम्वद्रव्य-प्रकर्षे १२
१२ अमु च च्छन्दसि
१३ अनुगादिनष्ठक्
१४ णचः स्त्रियामञ्
१५ अणिनुणः १६
१६ विसारिणो मत्स्ये
१७ संख्यायाः क्रियाभ्यावृत्ति-गणने कृत्वसुच् १८,२०
१८ द्वि-त्रि-चतुर्भ्यः सुच् १९
१९ एकस्य सकृच्च
२० विभाषा वहोर्धाऽविप्रकृष्टकाले (१)
२१ तत्प्रकृतवचने मयट् २५

---

११२ केवलं स्वार्थे पादान्तः प्रत्ययः ।
१ स्वार्थिका एव विशिष्टार्थे चलन्ति ।
२ व्यवसर्गो दानम् ।
२१ उच्यते वा उच्यतेऽस्मिन् वेति भावेऽधिकरणे ल्युटि वचनशब्दसिद्धिः। ततश्च प्रकृतस्य वचनम् अभिधानम् इत्येको भावाऽर्थः । अपरश्च प्रकृतम् उच्यतेऽस्मिन्निति अधिकरणार्थः । पूर्वत्र अन्नमयं प्रभूतमन्नं वर्तते । उत्तरत्र अन्नमयो यज्ञः, प्रभूतान्नवान् यज्ञ इति विवेकः ।

२२ समूहवच्च बहुषु
२३ अनन्तावसथेतिह-भेषजाञ्ञ्यः
२४ देवतान्तात्तादर्थ्ये यत् २६,२५
२५ पादार्घाभ्यां च
(वा०) भाग-रूप-नामभ्यो धेयः
२६ अतिथेर्ञ्यः
२७ देवात्तल्
२८ अवेः कः
२९ यावादिभ्यः कन् ३३
३० लोहितान्मणौ ३२
३१ वर्णे चानित्ये ३३
३२ रक्ते ३३
३३ कालाच्च
३४ विनयादिभ्यष्ठक् ३५
३५ वाचो व्याहृतार्थायाम् ३६
३६ तद्युक्तात्कर्मणोऽण् ३८
३७ ओषधेरजातौ
३८ प्रज्ञादिभ्यश्च
३९ मृदस्तिकन् ४०
४० स-स्नौ प्रशंसायाम् ( २ ) ४१
४१ वृक-ज्येष्ठाभ्यां तिल्-तातिलौ च च्छन्दसि
४२ बह्वल्पार्थाच्छस् कारकादन्यतरस्याम् ४३,४९
४३ संख्यैकवचनाच्च वीप्सायाम्
४४ प्रतियोगे पञ्चम्यास्तसिः ४५,४९
(वा०) आद्यादिभ्य उपसंख्यानम्
४५ अपादाने चाहीय-रुहोः
४६ अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ४७
४७ हीयमान-पाप-योगाच्च
४८ षष्ठ्या व्याश्रये ४९
४९ रोगाच्चापनयने
५० कृभ्वस्ति-योगे संपद्यकर्तरि च्विः ५७,५२,५१
५१ अरुर्मनश्चक्षुश्चेतो-रहो-रजसां लोपश्च
५२ विभाषा साति कार्त्स्न्ये ५३,५५
५३ अभिविधौ संपदा च ५५
५४ तदधीनवचने ५५
५५ देये त्रा च ५६
५६ देव-मनुष्य-पुरुष-पुरु-मर्त्येभ्यो द्वितीया-सप्तम्योर्बहुलम्
५७ अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच् ६७
५८ कृञो द्वितीय-तृतीय-शम्ब-बीजात् कृषौ ६७,५९
५९ संख्यायाश्च गुणान्तायाः
६० समयाच्च यापनायाम् (३)
६१ सपत्र-निष्पत्रादतिव्यथने
६२ निष्कुलान्निष्कोषणे
६३ सुख-प्रियादानुलोम्ये
६४ दुःखात्प्रातिलोम्ये
६५ शूलात्पाके
६६ सत्यादशपथे
६७ मद्रात्परिवापणे
६८ समासान्ताः १६०

५० 'अभूततद्भावे' इत्यर्थः ।
६८ समासान्तास्तद्धितप्रत्यया येषु तेषां हि उभयथा प्रातिपदिकत्वम् समासत्वात्तद्धितान्तत्वाच्च ।

६९ न पूजनात् ७२
७० किमः क्षेपे
७१ नञस्तत्पुरुषात् ७२
७२ पथो विभाषा
७३ बहुव्रीहौ संख्येये डजबहुगणात्
७४ ऋक्पूरब्धूः पथामानक्षे
७५ अच्प्रत्यन्वव-पूर्वात्सामलोम्नः ८७
७६ अक्ष्णोऽदर्शनात्
७७ अचतुर-विचतुर-सुचतुर-स्त्रीपुंस-धेन्वनडुहर्क्साम-वाङ्मनसाक्षि-भ्रुव-दारगवोर्वष्ठीव-पदष्ठीव-नक्तं-दिव-रात्रिंदिवाहर्दिव-सरजस-निःश्रेयस-पुरुषायुष-द्व्यायुष-त्र्यायुष-र्ग्यजुष-जातोक्ष-महोक्ष-वृद्धोक्षोपशुन-गोष्ठश्वाः
७८ ब्रह्महस्तिभ्यां वर्चसः
७९ अव-समन्धेभ्यस्तमसः
८० श्वसो वसीयः श्रेयसः (४)
८१ अन्वव-तप्ताद्रहसः
८२ प्रतेरुरसः सप्तमीस्थात्
८३ अनुगवमायामे
८४ द्विस्तावा त्रिस्तावा वेदिः
८५ उपसर्गादध्वनः
८६ तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः १०५,८८
८७ अहः-सर्वैकदेश-संख्यात-पुण्याच्च रात्रेः
८८ अह्नोऽह्न एतेभ्यः ९०
८९ न संख्यादेः समाहारे
९० उत्तमैकाभ्यां च
९१ राजाहःसखिभ्यष्टच् ११२
९२ गोरतद्धितलुकि
९३ अग्राख्यायामुरसः
९४ अनोश्मायःसरसां जाति-संज्ञयोः
९५ ग्राम-कौटाभ्यां च तक्ष्णः
९६ अतेः शुनः ९७
९७ उपमानादप्राणिषु ९८
९८ उत्तर-मृग-पूर्वाच्च सक्थ्नः
९९ नावो द्विगोः १००,१०१
१०० अर्धाच्च (५) १०१
१०१ खार्याः प्राचाम्
१०२ द्वि-त्रिभ्यामञ्जलेः
१०३ अनसन्तान्नपुंसकाच्छन्दसि
१०४ ब्रह्मणो जानपदाख्यायाम् १०५
१०५ कु-महद्भ्यामन्यतरस्याम्
१०६ द्वन्द्वाच्चु-द-षहान्तात्समाहारे
१०७ अव्ययीभावे शरत्प्रभृतिभ्यः ११२
१०८ अनश्च १०९
१०९ नपुंसकादन्यतरस्याम् १११

---

७४ अ + अनक्षे इति छेदः ।
७५ कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः ।
गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि ॥
८८ एतेभ्यः सर्वादिभ्यः ।
९१ तत्पुरुषस्येति वर्तते, पञ्चम्यन्ततया विपरिणम्यते ।

११० नदी-पौर्णमास्याग्रहायणीभ्यः
१११ झयः
११२ गिरेश्च सेनकस्य
११३ **बहुव्रीहौ** सक्थ्यक्ष्णोः **स्वाङ्गात्षच्** १६०,११४
११४ अङ्गुलेर्दारुणि
११५ द्वि-त्रिभ्यां ष मूर्ध्नः
११६ **अप्पूरणी-प्रमाण्योः** ११७
११७ अन्तर्बहिर्भ्यां च लोम्नः
११८ **अञ्नासिकायाः** संज्ञायां नसं चास्थूलात् १२१,११९
११९ उपसर्गाच्च
१२० सुप्रात-सुश्व-सुदिव-शारि-कुक्ष-चतुरश्रैणीपदाजपद-प्रोष्ठपदाः ( ६ )
१२१ **नञ्दुःसुभ्यो** हलि-सक्थ्योरन्यतरस्याम् १२२
१२२ **नित्यमसिच्**प्रजा-मेधयोः १२३
१२३ बहुप्रजाश्छन्दसि
१२४ धर्मा**दनिच्**केवलात् १२६
१२५ जम्भा-सुहरित-तृण-सोमेभ्यः
१२६ दक्षिणेर्मा लुब्धयोगे
१२७ **इच्**कर्मव्यतिहारे १२८
१२८ द्विदण्ड्यादिभ्यश्च
१२९ प्र-संभ्यां **जानुनोर्ज्ञुः** १३०
१३० ऊर्ध्वाद्विभाषा
१३१ ऊधसोऽनङ् १३३
१३२ **धनुषश्च** १३३
१३३ वा संज्ञायाम्
१३४ जायाया निङ्
१३५ **गन्धस्येदुत्**पूति-सु-सुरभिभ्यः १३६
१३६ अल्पाख्यायाम्
१३७ **उपमानाच्च** १३८
१३८ पादस्य लोपोऽहस्त्यादिभ्यः
१३९ कुम्भपदीषु च
१४० **संख्या-सु-पूर्वस्य** ( ७ ) १४१
१४१ वयसि **दन्तस्य दतृ** १४५
१४२ छन्दसि च
१४३ स्त्रियां संज्ञायाम्
१४४ **विभाषा** श्यावारोकाभ्याम् १४५
१४५ अग्रान्त-शुद्ध-शुभ्र-वृष-वराहेभ्यश्च
१४६ ककुदस्यावस्थायां **लोपः** १५०
१४७ त्रिककुत्पर्वते
१४८ उद्विभ्यां **काकुदस्य** १४९
१४९ पूर्णाद्विभाषा
१५० सुहृद्-दुर्हृदौ मित्रामित्रयोः
१५१ उरःप्रभृतिभ्यः **कप्** ६०

---

१२० सारि शारु इति पाठान्तरम् ।
१२४ केवलग्रहणात् त्रिपदबहुव्रीहौ नेति जयादित्यादयः । साक्षात्कृतधर्माणो मुनय इति भाष्यप्रयोगात् निवृत्तिपरमस्वधर्मेत्यादि साध्वेव ।
१२९ जानुशब्दो हि द्विवचनान्तो ज्ञेयोऽतो जानुनोरिति षष्ठीद्विवचनम् ।
१५१ इयदवधिः स्यादिः 'स्वादिष्वसर्वनामस्थाने १।४।१७' इति-सूत्रे बहुवचनपाठात् ।

१५२ इनः स्त्रियाम्
१५३ नद्यृतश्च
१५४ शेषाद्विभाषा
१५५ न संज्ञायाम्
१५६ ईयसश्च
१५७ वन्दिते भ्रातुः
१५८ ऋतश्छन्दसि
१५९ नाडी-तन्त्र्योः स्वाङ्गे
१६० निष्प्रवाणिश्च (८)

१६० [1]पादशतस्य [2]तत्प्रकृत [3]वृकज्येष्ठाभ्यां [4]सपत्न्यान्व [5]वतमा [6]त्खार्या[7] नञ्दुःसुभ्यो[8]वयसि विंशतिः ।

इति पाणिनीयसूत्रपाठे पञ्चमाध्यायस्य चतुर्थः पादः ।

इति पूर्वार्धम् ।

# अथ षष्ठोऽध्यायः

## प्रथमः पादः

( द्वित्वप्रकरणम् )

१ **एकाचो द्वे प्रथमस्य** ११
२ **अजादेर्द्वितीयस्य** ११
३ न न्द्राः संयोगादयः
(वा०) यथेष्टं नामधातुष्विति वक्तव्यम्
४ पूर्वोऽभ्यासः
५ उभे **अभ्यस्तम्** ६
६ जक्षित्यादयः षट्
७ तुजादीनां दीर्घोऽभ्यासस्य
८ लिटि **धातोरनभ्यासस्य** ११
९ सन्-यङोः
१० श्लौ
११ चङि
१२ दाश्वान्-साह्वान्-मीढ्वांश्च
१३ **ष्यङः संप्रसारणं** पुत्र-पत्योस्तत्पुरुषे १४,३१
१४ बन्धुनि बहुव्रीहौ
१५ **वचि-स्वपि-यजादीनां किति** १७,१६
१६ **ग्रहि-ज्या-वयि-व्यधि-वष्टि-विचति-वृश्चति-पृच्छति-भृज्जतीनां** ङिति च १७
१७ लिटचभ्यासस्योभयेषाम्
१८ स्वापेश्चङि
१९ स्वपि-स्यमि-व्येञां यङि २१
२० न वशः (१)
२१ चायः की
२२ स्फायः स्फी **निष्ठायाम्** २८
२३ स्त्यः प्रपूर्वस्य
२४ द्रवमूर्ति-स्पर्शयोः **श्यः** २६
२५ प्रतेश्च
२६ **विभाषा**ऽभ्यवपूर्वस्य २८
२७ श्रृतं पाके
२८ **प्यायः पी** २९
२९ **लिड्यङोश्च** ३०
३० **विभाषा श्वेः** ३१
३१ **णौ च संश्चङोः** ३२
३२ **ह्वः संप्रसारणम्** ३४,४४
३३ अभ्यस्तस्य च
३४ **बहुलं छन्दसि** ३५,३६
३५ चायः की
३६ अपस्पृधेथामानृचुरानृहुश्चिच्युषे-तित्याज-श्राताः श्रितमाशीराशीर्ताः
३७ न संप्रसारणे **संप्रसारणम्** ४४

१ इतो द्वित्वप्रकरणम् १२ यावत्, ततः सम्प्रसारणम् (१३-४४), ततः आत्वम् ( ४५-५७ ), ततः प्रकीर्णम् ( ५८-६५ ), ततो लोपः ( ६६-७० ), ततः संहिता ( ७२-१५७ ), ततः स्वर-सूत्राणि ( ६।३।१ ) इत्यतः प्राक् ।

३२ सम्प्रसारणम् इत्यनुवर्तमाने पुनः सम्प्रसारणमित्युक्तिः विभाषानिवृत्तये ।

३८ **लिटि** वयो यः ४०
३९ वश्चास्यान्यतरस्यां किति
४० **वेञः** ( २ ) ४१
४१ **ल्यपि** च ४४
४२ ज्यश्च
४३ **व्यश्च** ४४
४४ विभाषा परेः
४५ **आदेच उपदेशे**ऽशिति ५७,६५
४६ न व्यो लिटि
४७ स्फुरति-स्फुलत्योर्घञि
४८ क्रीङ्-जीनां **णौ** ४९
४९ सिद्ध्यतेरपारलौकिके
५० मीनाति-मिनोति दीङां **ल्यपि** च ५१
५१ **विभाषा** लीयतेः ५६
५२ खिदेश्छन्दसि
५३ अपगुरो णमुलि
५४ चि-स्फुरोर्णौ ५७
५५ प्रजने वीयतेः
५६ विभेतेर्हेतुभये ५७
५७ नित्यं स्मयतेः
५८ सृजि-दृशोर्झल्यमकिति ५९
५९ अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्
६० शीर्षंश्छन्दसि ( ३ ) ६१
६१ ये च तद्धिते
६२ अचि शीर्षः
६३ पद्-दन्नो-मास्-हृन्निशसन्-यूषन्-दोषन्-यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु
६४ **धात्वादेः** षः सः ६५
६५ णो नः
६६ **लोपो** व्योर्वलि ७०
६७ वेरपृक्तस्य
६८ हल्-ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं **हल्** ६९
६९ एङ्-ह्रस्वात् संबुद्धेः
७० शेश्छन्दसि वहुलम्
७१ **ह्रस्वस्य** पिति कृति **तुक्** ७३,७६
७२ **संहितायाम्** १५८

---

३९ खमूयुर्वसुधामूवुः १४-८४ इति भट्टिः। चतुर्दशे सर्गे भट्टिकाव्यशास्त्रे लिङ्विलसितं दृशेलिमम्। किम्वहुना भट्टिकाव्यशास्त्रं सर्वैः सुबोधाय साध्येलिमम्।

६४ 'आदेश-प्रत्यययोः ८।३।५९' इति षत्वार्थं षोपदेशो धातुः। 'अजुदन्त्यपराः सादयः षोपदेशाः, स्मिङ् स्विदि स्वदि स्वञ्जि स्वपयश्च। सृपि-सृजि-स्तृ-स्त्या-सेक्-सृ-वर्जम्' इति भाष्यम्।

६५ णोपदेशो णत्वार्थं पुनरुपसर्गयोगे 'उपसर्गाद् ८।४।१४' इति। 'सर्वे नादयो णोपदेशाः, नृति-नन्दि-नर्दि-नक्क-नाटि-नाथृ-नाधृ-वर्जम्' इति भाष्यम्।

७२ इतः सन्धिः प्रारब्धः। पूर्वं तुक् ( ७३-७६ ), ततो यणादिः ( ७७-८३ ), ततः एकादेशः ( ८४-१११ ) प्राक्। तत उत्वम् ( ११२-११४ ), ततः

७३ छे च ७६
७४ आङ्-माङोश्च
७५ दीर्घात्
७६ पदान्ताद्वा
७७ इको यणचि १२५
७८ एचोऽयवायावः ८३
७९ वान्तो यि प्रत्यये ८०,८३
(वा०) अध्वपरिमाणे च
८० धातोस्तन्निमित्तस्यैव ( ४ ) ८३
८१ क्षय्य-जय्यौ शक्यार्थे
८२ क्रय्यस्तदर्थे
८३ भय्य-प्रवय्ये च च्छन्दसि
८४ एकः पूर्वपरयोः १११
८५ अन्तादिवच्च
८६ षत्व-तुकोरसिद्धः
८७ आद् गुणः ९६
८८ वृद्धिरेचि ९२,८९
८९ एत्येधत्यूठ्सु
(वा०) अक्षादूहिन्यामुपसंख्यानम्
(वा०) प्रादूहोढोढ्येषैष्येषु
(वा०) ऋते च तृतीयासमासे
(वा०) प्र-वत्सतर-कम्बल-वसनार्ण-दशानामृणे
९० आटश्च
९१ उपसर्गादृति धातौ ९४,९२,९४
९२ वा सुप्यापिशलेः
९३ औतोऽम्-शसोः
९४ एङि पररूपम् १००
(वा०) शकन्ध्वादिषु पररूपं वाच्यम्
९५ ओमाङोश्च
९६ उस्यपदान्तात् ९७
९७ अतो गुणे
९८ अव्यक्तानुकरणस्यात इतौ १००,९९
९९ नाम्रेडितस्यान्त्यस्य तु वा
१०० नित्यमाम्रेडिते डाचि (वा०) (५)
१०१ अकः सवर्णे दीर्घः १०७,१०६
(वा०) ऋति सवर्णे ऋ वा
(वा०) ऌति सवर्णे ऌ वा
१०२ प्रथमयोः पूर्वसवर्णः १०६
१०३ तस्माच्छसो नः पुंसि
१०४ नादिचि १०५,१०६
१०५ दीर्घाज्जसि च १०६
१०६ वा च्छन्दसि
१०७ अमि पूर्वः ११०
१०८ सम्प्रसारणाच्च
१०९ एङः पदान्तादति ११०,११३
११० ङसि-ङसोश्च ११२
१११ ऋत उत् ११४
११२ ख्यत्यात् परस्य
११३ अतो रोरप्लुतादप्लुते ११४
११४ हशि च
११५ प्रकृत्यान्तः पादमव्यपरे १३०,११६

---

प्रकृतिभावः ( ११५–११८ ), ततः प्रकीर्णम् ( १२९–१३४ ), ततः सुट् ( १३५–१५७ ) ।

९३ आ + औतः + अम्-शसोः इतिच्छेदः ।

११६ अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च
११७ यजुष्युरः १२१
११८ आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बिके पूर्वे
११९ अङ्ग इत्यादौ च
१२० अनुदात्ते च कु-धपरे (६) १२१
१२१ अवपथासि च
१२२ सर्वत्र विभाषा गोः १२३,१२४
१२३ अवङ् स्फोटायनस्य १२४
१२४ इन्द्रे च
१२५ प्लुत-प्रगृह्या अचि नित्यम् १३०
१२६ आङोऽनुनासिकश्छन्दसि
१२७ इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च १२८
१२८ ऋत्यकः
१२९ अप्लुतवदुपस्थिते १३०
१३० ई३ चाक्रवर्मणस्य
१३१ दिव उत्
१३२ एतत्-तदोः सुलोपोऽकोरनञ्समासे हलि १३४,१३३
१३३ स्यश्छन्दसि वहुलम्
१३४ सोऽचि लोपे चेत्पादपूरणम्
१३५ सुट्कात् पूर्वः १५७
१३६ अडभ्यासव्यवायेऽपि ( वा० )
१३७ सं-पर्युपेभ्यः करोतौ भूषणे १३८,१३९
१३८ समवाये च
१३९ उपात् प्रतियत्न-वैकृत-वाक्याध्याहारेषु १४१
१४० किरतौ लवने १४२
१४१ हिंसायां प्रतेश्च
१४२ अपाच्चतुष्पाच्छकुनिष्वालेखने
१४३ कुस्तुम्वुरूणि जातिः
१४४ अपरस्पराः क्रियासातत्ये
१४५ गोष्पदं सेवितासेवित-प्रमाणेषु
१४६ आस्पदं प्रतिष्ठायाम्
१४७ आश्चर्यमनित्ये
१४८ वर्चस्केऽवस्करः
१४९ अपस्करो रथाङ्गम्
१५० विष्किरः शकुनौ वा
१५१ ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे
१५२ प्रतिष्कशश्च कशेः
१५३ प्रस्कण्व-हरिश्चन्द्रावृषी
१५४ मस्कर-मस्करिणौ वेणु-परिव्राजकयोः
१५५ कास्तीराजस्तुन्दे नगरे
१५६ कारस्करो वृक्षः ( ग. सू. )
१५७ पारस्कर-प्रभृतीनि च संज्ञायाम्

---

१२५ अचीत्यनुवर्तमाने पुनरज्ग्रहणं निमित्तस्य अचः परिग्रहार्थम् । तेनेह न प्रकृतिभावः, जानु उ अस्य रुजति = जान्वस्य रुजति । प्रगृह्यादुकारात् परस्य अकारस्य सवर्णदीर्घं प्रति अनिमित्तत्वात् ।

१४४ सातत्यशब्दसादृश्याद् भाष्याशयमाश्रित्य पद्यम् । 'लुम्पेदवश्यमः कृत्ये तुम् काममनसोरपि । समो वा हिततयोर्मांसस्य पचि युड्घञोः ॥

१५८ अनुदात्तं पदमेकवर्जम्
१५९ कर्षात्वतो घञोऽन्त उदात्तः　१८५,२२०
१६० उञ्छादीनां च　(८)
१६१ अनुदात्तस्य च यत्रोदात्तलोपः
१६२ धातोः
१६३ चितः　१६४
१६४ तद्धितस्य　१६५
१६५ कितः
१६६ तिसृभ्यो जसः
१६७ चतुरः शसि
१६८ सावेकाचस्तृतीयादिर्विभक्तिः　१६९,१८४
१६९ अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे　१७७
१७० अञ्चेश्छन्दस्यसर्वनामस्थानम्　१७५
१७१ ऊडिदं-पदाद्यप्-पुम्रै-द्युभ्यः
१७२ अष्टनो दीर्घात्
१७३ शतुरनुमो नद्यजादी　१७५
१७४ उदात्तयणो हल्पूर्वात्　१७५
१७५ नोङ्धात्वोः
१७६ ह्रस्व-नुड्भ्यां मतुप्　१७७
१७७ नामन्यतरस्याम्　१८७
१७८ ङ्यश्छन्दसि बहुलम्
१७९ षट्-त्रि-चतुर्भ्यो हलादिः　१८१
१८० झल्युपोत्तमम्　१८१
१८१ विभाषा भाषायाम्
१८२ न गो-श्वन्-साववर्ण-राडङ्-क्रुङ्-कृद्भ्यः　१८४
१८३ दिवो झल्　१८४
१८४ नृ चान्यतरस्याम्
१८५ तित् स्वरितम्
१८६ तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः　१९२
१८७ आदिः सिचोऽन्यतरस्याम्　१८८
१८८ स्वपादि-हिंसामच्यनिटि　१८९
१८९ अभ्यस्तानामादिः　१९२,१९१
१९० अनुदात्ते च
१९१ सर्वस्य सुपि
१९२ भी-ह्री-भृ-हु-मद-जन-धन-दरिद्रा-जागरां प्रत्ययात्पूर्वं पिति　१९३
१९३ लिति
१९४ आदिर्णमुल्यन्यतरस्याम्　१९६
१९५ अचः कर्तृयकि
१९६ थलि च सेटीडन्तो वा
१९७ ञ्नित्यादिर्नित्यम्　२१६
१९८ आमन्त्रितस्य च
१९९ पथि-मथोः सर्वनामस्थाने
२०० अन्तश्च तवै युगपत्
२०१ क्षयो निवासे
२०२ जयः करणम्
२०३ वृषादीनां च

---

१५८ भाषायामपि स्वरः प्रयुक्तो भवति स्म पूर्वं, सम्प्रति तु वेदेऽपि हस्तचालनात् स्वरं सूचयन्ति वैदिकाः। कालप्रभावोऽयम्।
१७० १६८ सूत्रे तृतीयादिरिति सत्त्वेऽपि असर्वनामग्रहणं शसोऽपि संग्रहणार्थम्।

२०४ **संज्ञायामुपमानम्** २०५
२०५ निष्ठा च द्व्यजनात्
२०६ शुष्क-धृष्टौ
२०७ आशितः कर्ता
२०८ रिक्ते **विभाषा** २०९
२०९ **जुष्टार्पिते** च छन्दसि २१०
२१० नित्यं मन्त्रे
२११ **युष्मदस्मदोर्ङसि** २१२
२१२ ङयि च
२१३ यतोऽनावः
२१४ ईड-वन्द-वृ-शंस-दुहां ण्यतः
२१५ **विभाषा** वेण्विन्धानयोः २१६
२१६ त्याग-राग-हास-कुह-श्वठ-क्रथानाम्
२१७ **उपोत्तमं** रिति २१८
२१८ चङ्यन्यतरस्याम्
२१९ मतोः पूर्वमात् **संज्ञायां स्त्रियाम्** २२१
२२० **अन्तोऽवत्याः** ( ११ ) २२३
२२१ ईवत्याः
२२२ चौ
२२३ समासस्य

[1]एकाचश्चा[2]यो [3]ल्यपि च [4]थे च क्षय्य[5]-जय्याव[6]कः सवर्णेऽ[7]वपथा[8]हिंसायाम[9]नुदात्तस्य वि[10]भाषा [11]क्षय ईव[12]त्यास्त्रीणि ।

**इति पाणिनीयसूत्रपाठे षष्ठाध्यायस्य प्रथमः पादः ।**

## द्वितीयः पादः

१ बहुव्रीहौ **प्रकृत्या पूर्वपदम्** ६३, १०९
२ **तत्पुरुषे** तुल्यार्थ-तृतीया-सप्तम्युपमानाव्यय-द्वितीया-कृत्याः २४
३ वर्णो वर्णेष्वनेते
४ गाध-लवणयोः प्रमाणे
५ दायाद्यं दायादे
६ प्रतिबन्धि चिर-कृच्छ्रयोः
७ पदेऽपदेशे
८ निवाते वातत्राणे
९ शारदेऽनार्तवे
१० अध्वर्यु-कषाययोर्जातौ
११ सदृश-प्रतिरूपयोः सादृश्ये
१२ द्विगौ प्रमाणे
१३ गन्तव्य-पण्यं वाणिजे
१४ मात्रोपज्ञोपक्रमच्छाये नपुंसके
१५ **सुख-प्रिययोर्हिते** १६
१६ प्रीतौ च
१७ स्वं स्वामिनि
१८ **पत्यावैश्वर्ये** २०
१९ न भू-वाक्-चिद्दिधिषु
२० वा भुवनम् ( १ )
२१ आशङ्का-बाधनेदीयस्सु संभावने
२२ पूर्वे भूतपूर्वे
२३ सविध-सनीड-समर्याद-सवेश-सदेशेषु सामीप्ये
२४ विस्पष्टादीनि गुणवचनेषु



१ यत्र म्लेच्छा अपि वेदार्थं कुर्वन्ति, आर्यास्तमर्थं बुद्ध्वा तदनुकूलमाचरन्तीत्यहो कालमहिमा ।

२५ श्र-ज्यावम-कन्-पापवत्सु-भावे कर्मधारये २८
२६ कुमारश्च २८
२७ आदिः प्रत्येनसि २८
२८ पूगेष्वन्यतरस्याम्
२९ इगन्त-काल-कपाल-भगाल-शरावेषु द्विगौ ३०,३१
३० बह्वन्यतरस्याम् ३१
३१ दिष्टि-वितस्त्योश्च
३२ सप्तमी सिद्ध-शुष्क-पक्व-बन्धेष्व-कालात्
३३ परि-प्रत्युपापा वर्ज्यमानाहोरात्रा-वयवेषु
३४ राजन्य-बहुवचन-द्वन्द्वेऽन्धक-वृष्णिषु ३७
३५ संख्या
३६ आचार्योपसर्जनश्चान्तेवासी
३७ कार्त-कौजपादयश्च
३८ महान् व्रीह्यपराह्ण-गृष्टीष्वास-जाबाल-भार-भारत-हैलिहिल-रौरव-प्रवृद्धेषु ३९
३९ क्षुल्लकश्च वैश्वदेवे
४० उष्ट्रः सादि-वाम्योः (२)
४१ गौः साद-सादि-सारथिषु
४२ कुरुगार्हपत-रिक्तगुर्वसूतजरत्यश्लीलदृढरूपा-पारेवडवा-तैतिलकद्रू-पण्यकम्बलो दासी-भाराणां च
४३ चतुर्थी तदर्थे ४५
४४ अर्थे
४५ क्ते च ४९
४६ कर्मधारयेऽनिष्ठा
४७ अहीने द्वितीया
४८ तृतीया कर्मणि ४९
४९ गतिरनन्तरः ५२,५१
५० तादौ च निति कृत्यतौ
५१ तवै चान्तश्च युगपत्
५२ अनिगन्तोऽञ्चतौ वप्रत्यये ५३
५३ न्यधी च
५४ ईषदन्यतरस्याम् ६३
५५ हिरण्य-परिमाणं धने
५६ प्रथमोऽचिरोपसंपत्तौ
५७ कतर-कतमौ कर्मधारये ५९
५८ आर्यो ब्राह्मण-कुमारयोः ५९
५९ राजा च ६०
६० षष्ठी प्रत्येनसि (३)
६१ क्ते नित्यार्थे
६२ ग्रामः शिल्पिनि ६३
६३ राजा च प्रशंसायाम्
६४ आदिरुदात्तः ९१
६५ सप्तमी-हारिणौ धर्म्येऽहरणे
६६ युक्ते च
६७ विभाषाऽध्यक्षे ६८
६८ पापं च शिल्पिनि
६९ गोत्रान्तेवासि-माणव-ब्राह्मणेषु क्षेपे
७० अङ्गानि मैरेये
७१ भक्ताख्यास्तदर्थेषु
७२ गो-बिडाल-सिंह-सैन्धवेषूपमाने
७३ अके जीविकार्थे ७४
७४ प्राचां क्रीडायाम्
७५ अणि नियुक्ते ७७
७६ शिल्पिनि चाकृञः ७७

७७ संज्ञायां च
७८ गो-तन्ति-यवं पाले
७९ णिनि ८०
८० उपमानं शब्दार्थ-प्रकृतावेव (४)
८१ युक्तारोह्यादयश्च
८२ दीर्घ-काश-तुष-भ्राष्ट्र-वटं जे ८३
८३ अन्त्यात् पूर्वं बह्वचः
८४ ग्रामेऽनिवसन्तः
८५ घोषादिषु च
८६ छात्र्यादयः शालायाम्
८७ प्रस्थेऽवृद्धमकर्क्यादीनाम् ८८
८८ मालादीनां च
८९ अमहन्नवं नगरेऽनुदीचाम्
९० अर्मे चावर्णं द्व्यच्-त्र्यच् ९१
९१ न भूताधिक-संजीव-मद्राश्म-कज्जलम्
९२ अन्तः ११०
९३ सर्वं गुणकार्त्स्न्ये
९४ संज्ञायां गिरि-निकाययोः
९५ कुमार्यां वयसि
९६ उदकेऽकेवले
९७ द्विगौ क्रतौ
९८ भाषायां नपुंसके
९९ पुरे प्राचाम् १०१
१०० अरिष्ट-गौड-पूर्वे च (५)
१०१ न हास्तिन-फलक-मार्देयाः
१०२ कुसूल-कूप-कुम्भ-शालं बिले
१०३ दिक्शब्दा ग्राम-जनपदाख्यान-चानराटेषु १०९
१०४ आचार्योपसर्जनश्चान्तेवासिनि
१०५ उत्तरपदवृद्धौ सर्वं च
१०६ बहुव्रीहौ विश्वं संज्ञायाम् १२०,१०८
१०७ उदराश्वेषुषु १०८
१०८ क्षेपे
१०९ नदी बन्धुनि
११० निष्ठोपसर्गपूर्वमन्यतरस्याम्
१११ उत्तरपदादिः १९९, १४२
११२ कर्णो वर्ण-लक्षणात् ११३
११३ संज्ञौपम्ययोश्च ११५
११४ कण्ठ-पृष्ठ-ग्रीवा-जङ्घं च
११५ शृङ्गमवस्थायां च
११६ नञो जर-मर-मित्र-मृताः
११७ सोर्मनसी अलोमोषसी १२०
११८ क्रत्वादयश्च
११९ आद्युदात्तं द्व्यच्छन्दसि १२०
१२० वीर-वीर्यौ च (६)
१२१ कूल-तीर-तूल-मूल-शालाक्ष-सममव्ययीभावे
१२२ कंस-मन्थ-शूर्प-पाय्य-काण्डं द्विगौ
१२३ तत्पुरुषे शालायां नपुंसके १३७,१२५
१२४ कन्था च १२५
१२५ आदिश्चिहणादीनाम्
१२६ चेल-खेट-कटुक-काण्डं गर्हायाम्
१२७ चीरमुपमानम्
१२८ पलल-सूप-शाकं मिश्रे
१२९ कूल-सूद-स्थल-कर्षाः संज्ञायाम्
१३० अकर्मधारये राज्यम् १३१
१३१ वर्ग्यादयश्च

१३२ पुत्र: पुंभ्य: १३३
१३३ नाचार्य-राजर्त्विक्-संयुक्त-ज्ञात्या-ख्येभ्य:
१३४ **चूर्णादीन्यप्राणिषष्ठ्या:** १३५
१३५ षट् च काण्डादीनि
१३६ कुण्डं वनम्
१३७ **प्रकृत्या** भगालम् १४२
१३८ शितेर्नित्यावह्वज् बहुव्रीहावभसत्
१३९ गति-कारकोपपदात् कृत्
१४० **उभे** वनस्पत्यादिषु **युगपत्** १४२
१४१ **देवताद्वन्द्वे** च (७) १४२
१४२ नोत्तरपदेऽनुदात्तादावपृथिवी-रुद्र-पूष-मन्थिषु
१४३ **अन्त:** १९९
१४४ थाथघञ्-क्ताजबित्र-काणाम्
१४५ सूपमानात् **क्त:** १४९
१४६ **संज्ञायाम**नाचितादीनाम् १४८
१४७ प्रवृद्धादीनां च
१४८ **कारकाद्दत्त**-श्रुतयोरेवाशिषि १५१
१४९ इत्थंभूतेन कृतमिति च
१५० अनो भाव-कर्मवचन:
१५१ मन्-क्तिन्-व्याख्यान-शयनासन-स्थान-याजकादि-क्रीता:
१५२ सप्तम्या: पुण्यम्
१५३ ऊनार्थ-कलहं **तृतीयाया:** १५४
१५४ मिश्रं चानुपसर्गमसन्धौ
१५५ **नञो गुणप्रतिषेधे** संपाद्यर्ह-हिता-लमर्थास्तद्धिता: १६१,१५६
१५६ य-यतोश्चातदर्थे
१५७ **अच्कावशक्तौ** १५८

१५८ **आक्रोशे** च १५९
१५९ संज्ञायाम्
१६० कृत्योकेष्णुच्-चार्वादयश्च (८)
१६१ विभाषा तृन्नन्न-तीक्ष्ण-शुचिषु
१६२ **बहुव्रीहा**विदमेतत्-तद्भ्य: प्रथम-पूरणयो: क्रियागणने १७७
१६३ **संख्याया: स्तन:** १६४
१६४ विभाषा छन्दसि
१६५ संज्ञायां मित्राजिनयो:
१६६ व्यवायिनोऽन्तरम्
१६७ **मुखं स्वाङ्गम्** १६९
१६८ नाव्यय-दिक्छब्द-गो-महत्-स्थूल-मुष्टि-पृथु-वत्सेभ्य:
१६९ निष्ठोपमानादन्यतरस्याम्
१७० **जाति-काल-सुखादिभ्यो**ऽनाच्छा-दनात् क्तोऽकृत-मित-प्रतिपन्ना: १७१
१७१ वा जाते
१७२ **नञ्-सुभ्याम्** १७४
१७३ **कपि** पूर्वम् १७४
१७४ ह्रस्वान्तेऽन्त्यात् पूर्वम्
१७५ **बहोर्न**ञ्वदुत्तरपदभूम्नि १७६
१७६ न गुणादयोऽवयवा:
१७७ **उपसर्गात्** स्वाङ्गं ध्रुवमपर्शु १९६
१७८ **वनं** समासे १७९
१७९ अन्त:
१८० **अन्तश्च** (९) १८१
१८१ न नि-विभ्याम्
१८२ परेरभितोभावि-मण्डलम्
१८३ प्रादस्वाङ्गं संज्ञायाम्
१८४ निरुदकादीनि च

१८५ अभेर्मुखम् १८६
१८६ अपाच्च १८७
१८७ स्फिग-पूत-वीणाऽञ्जोऽध्व-कुक्षि-सीर-नाम नाम च
१८८ अधेरुपरिस्थम्
१८९ अनोरप्रधान-कनीयसी १२०
१९० पुरुषश्चान्वादिष्टः
१९१ अतेरकृत्पदे
१९२ नेरनिधाने
१९३ प्रतेरंश्वादयस्तत्पुरुषे १९६
१९४ उपाद् द्व्यजजिनमगौरादयः
१९५ सोरवक्षेपणे
१९६ विभाषोत्पुच्छे १९८
१९७ द्वि-त्रिभ्यां पाद्-दन्मूर्धसु बहुव्रीहौ
१९८ सक्थं चाक्रान्तात्
१९९ परादिश्छन्दसि बहुलम्

[1]बहुव्रीहावा[2]शङ्कागौः[3]साद्-क्ते[4] नित्यार्थे[5] युक्ता-न[6] हास्तिन[7]-कूलतीर-देवता[8]-विभाषा[9] न[10] निव्येकोनविंशतिः ।

इति पाणिनीयसूत्रपाठे षष्ठाध्यायस्य द्वितीयः पादः ।



## तृतीयः पादः

१ अलुगुत्तरपदे २४,१३१
२ पञ्चम्याः स्तोकादिभ्यः
३ ओजः-सहोऽम्भस्तमसस्तृतीयायाः ६
४ मनसः संज्ञायाम् ५
५ आज्ञायिनि च
६ आत्मनश्च ७
७ वैयाकरणाख्यायां चतुर्थ्याः ८
८ परस्य च
९ हलदन्तात् सप्तम्याः संज्ञायाम् १८,२०
१० कारनाम्नि च प्राचां हलादौ
११ मध्याद् गुरौ
(वा०) अन्ताच्च
१२ अमूर्ध-मस्तकात् स्वाङ्गादकामे
१३ बन्धे च विभाषा
१४ तत्पुरुषे कृति बहुलम्
१५ प्रावृट्-शरत्-काल-दिवां जे १६
१६ विभाषा वर्ष-क्षर-शर-वरात् १८
१७ घ-काल-तनेषु कालनाम्नः
१८ शय-वास-वासिष्वकालात्
१९ नेन्सिद्ध-बध्नातिषु च २०
२० स्थे च भाषायाम् (१)
२१ षष्ठ्या आक्रोशे २४,२३

१ 'उत्तरपदे' इति पादान्तम् । अलुक् चतुर्विंशं यावत् । ततः प्रकीर्णम् ( २५-३३ ); ततः पुंवद् ( ३४-४२ ), ततः प्रकीर्णम् ( ४३-६० ), ततो ह्रस्वः ( ६१-६६ ), ततो मुम् ( ६७-७२ ), ततः प्रकीर्णम् ( ७३-७७ ) ततः सभायः ( ७८-८९ ), ततः प्रकीर्णम् ( ९०-११० ), ततो दीर्घः ( १११-६।४।१८ ) यावत् ।

२२ पुत्रेऽन्यतरस्याम्
२३ **ऋतो विद्या-योनि-संबन्धेभ्यः** २४,२५
२४ विभाषा स्वसृ-पत्योः
२५ **आनङ् ऋतो द्वन्द्वे** २६
२६ **देवताद्वन्द्वे च** ३१
२७ ईदग्नेः सोम-वरुणयोः २८
२८ इद्वृद्धौ
२९ **दिवो द्यावा** ३०
३० दिवसश्च पृथिव्याम्
३१ उषासोषसः
३२ मातर-पितरावुदीचाम्
३३ पितरा-मातरा च च्छन्दसि
३४ **स्त्रियाः पुंवद्भाषित-पुंस्कादनूङ्-** समानाधिकरणे स्त्रियामपूरणी-प्रियादिषु ४२, ४३, ४२
३५ तसिलादिष्वाकृत्वसुचः
३६ क्यङ्-मानिनोश्च
३७ **न** कोपधायाः ४३
३८ संज्ञा-पूरण्योश्च
३९ वृद्धि-निमित्तस्य च तद्धितस्यारक्त-विकारे
४० **स्वाङ्गाच्चेतोऽमानिनि** ( २ ) ४१
४१ जातेश्च
४२ पुंवत् कर्मधारय-जातीय-देशीयेषु
(वा०) कुक्कुट्यादीनामण्डादिषु

४३ **घ-रूप-कल्प-चेलड्-ब्रुव-गोत्र-मत-हतेषु** ङ्योऽनेकाचो **ह्रस्वः** ४५
४४ **नद्याः** शेषस्यान्यतरस्याम् ४५
४५ उगितश्च
४६ **आन्महतः** समानाधिकरण-जातीययोः ४९
४७ द्व्यष्टनः **संख्यायामबहुव्रीह्य-शीत्योः** ४९
४८ **त्रेस्त्रयः** ४९
४९ विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्
५० **हृदयस्य** हृल्लेख-यदण्-लासेषु ५१
५१ वा शोक-ष्यञ्-रोगेषु
५२ **पादस्य** पदाज्याति-गोपहतेषु ५६
५३ **पद्यत्यतदर्थे** ५६
५४ हिम-काषि-हतिषु च
५५ ऋचः शे
५६ वा घोष-मिश्र-शब्देषु
५७ **उदकस्योदः** संज्ञायाम् ६०
५८ पेषं-वास-वाहन-धिषु च
५९ एक-हलादौ पूरयितव्येऽन्य-**तरस्याम्** ६१
६० मन्थौदनसक्तु-बिन्दु-वज्र-भार-हार-वीवध-गाहेषु च ( ३ )
६१ इको **ह्रस्वोऽ**ङ्यो गालवस्य ६६
६२ एकतद्धिते च
६३ **ङ्यापोः** संज्ञा-छन्दसोर्बहुलम् ६४

---

३४ भाषित-पुंस्कात् अनूङ् यस्मिन् स्त्रीशब्दे स भाषितपुंस्कादनूङ् स्त्रीशब्दस्त-स्य पुंवद्भाव इत्यर्थः । पञ्चम्या अलुक्, षष्ठ्या लुक् तु निपातनाज्ज्ञेयः ।

६४ त्वे च
६५ इष्टकेषीका-मालानां चित-तूल-भारिषु
६६ खित्यनव्ययस्य ६९,६७
६७ अरुर्द्विषदजन्तस्य मुम् ७२
६८ इच एकाचोऽम्प्रत्ययवच्च
६९ वाचंयम-पुरन्दरौ च
७० कारे सत्यागदस्य
७१ श्येन-तिलस्य पाते ञे
७२ रात्रेः कृति विभाषा
७३ न-लोपो नञः ७७
७४ तस्मान्नुडचि
७५ नभ्राण्-नपान्नवेदा-नासत्या-नमुचि-नकुल-नख-नपुंसक-नक्षत्र-नक्र-नाकेषु प्रकृत्या ७७
७६ एकादिश्चैकस्य चादुक्
७७ नगोऽप्राणिष्वन्यतरस्याम्
७८ सहस्य सः संज्ञायाम् ८३,८९
७९ ग्रन्थान्ताधिके च
८० द्वितीये चानुपाख्ये ( ४ )
८१ अव्ययीभावे चाकाले
८२ वोपसर्जनस्य
८३ प्रकृत्याशिष्यगोवत्स-हलेषु
८४ समानस्य च्छन्दस्यमूर्द्ध-प्रभृत्युदर्केषु ८८
८५ ज्योतिर्जनपद-रात्रि-नाभि-नाम-गोत्र-रूप-स्थान-वर्ण-वयो-वचन-बन्धुषु
८६ चरणे ब्रह्मचारिणि
८७ तीर्थे ये ८८
८८ विभाषोदरे
८९ दृग्दृश-वतुषु ९१
९० इदं-किमोरीश्-की
९१ आ सर्वनाम्नः ९२
९२ विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये ९५
९३ समः समि
९४ तिरसस्तिर्यलोपे
९५ सहस्य सध्रिः ९६
९६ सधमाद-स्थयोश्छन्दसि
९७ द्व्यन्तरुपसर्गेभ्योऽप ईत् ९८
९८ ऊदनोर्देशे
९९ अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु १००
१०० अर्थे विभाषा (५)
१०१ कोः कत् तत्पुरुषेऽचि १०८,१०३
१०२ रथ-वदयोश्च
१०३ तृणे च जातौ
१०४ का पथ्यक्षयोः १०८
१०५ ईषदर्थे
१०६ विभाषा पुरुषे १०८
१०७ कवं चोष्णे १०८
१०८ पथि च च्छन्दसि
१०९ पृषोदरादीनि यथोपदिष्टम्

---

१०९ शिष्टप्रयोगाः सर्वे निरुक्त्या साध्याः । तथा हि—वर्णागमो वर्ण-विपर्ययश्च द्वौ चापरौ वर्णविकार-नाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥

११० संख्या-विसाय-पूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ
१११ **ढ्रलोपे पूर्वस्य दीर्घोऽणः** ११२ ( ६।४।१८ )
११२ सहि-वहोरोदवर्णस्य
११३ साढचै साढ्वा साढेति निगमे
११४ **संहितायाम्** १३५
११५ कर्णे लक्षणस्याविष्टाष्ट-पञ्च-मणि-भिन्न-छिन्न-च्छिद्र-स्रुव-स्वस्तिकस्य
११६ नहि-वृति-वृषि-व्यधि-रुचि-सहि-तनिषु क्वौ
११७ वन-गिर्योः **संज्ञायां** कोटर-किंशुलुकादीनाम् १२०
११८ वले
११९ **मतौ** वह्वचोऽनजिरादीनाम् १२०
१२० शरादीनां च ( ६ )
१२१ इको वहेऽपीलोः
१२२ **उपसर्गस्य** घञ्यमनुष्ये बहुलम् १२४
१२३ **इकः** काशे १२४
१२४ दस्ति
१२५ **अष्टनः** संज्ञायाम् १२६
१२६ छन्दसि च
१२७ चितेः कपि
१२८ **विश्वस्य** वसुराटोः १३०
१२९ नरे संज्ञायाम्
१३० मित्रे चर्षौ
१३१ **मन्त्रे** सोमाश्वेन्द्रिय-विश्व-देव्यस्य मतौ १३२
१३२ ओषधेश्च विभक्तावप्रथमायाम्
१३३ **ऋचि** तु-नु-घ-मक्षु-तङ्-कुत्रो-रुष्याणाम् १३६
१३४ इकः सुञि
१३५ द्व्यचोऽतस्तिङः
१३६ निपातस्य च
१३७ अन्येषामपि दृश्यते
१३८ चौ
१३९ **संप्रसारणस्य** ६।४।२

[1]अलुक्[2]षष्ठ्या [3]जातेरि[4]कोऽ[5]व्ययीभावे कोः[6]कत्तदि[7]को एकोनविंशतिः ।

**इति पाणिनीयसूत्रपाठे षष्ठाध्यायस्य तृतीयः पादः ।**

●

## चतुर्थः पादः

१ **अङ्गस्य** ७।४।९७
२ हलः

---

१११ इतो दीर्घः 'क्रमश्च क्त्वि ६।४।१८' इति यावत् याति ।

१ अङ्गाधिकारः सप्तमाध्यायान्तं याति । तत्र दीर्घस्तु अष्टादशावधि । ततः प्रकीर्णाऽनन्तरम् 'आर्धधातुके ६।४।४६' इति 'मयतेरिदन्यतरस्याम् ६।४।७०' इति यावत् । ततः प्रकीर्णाऽनन्तरम् 'सार्वधातुके ( ८७-११९ )' यावत् । तत एवम् ( १२०-१२६ ), ततो 'भस्य ६।४।१२९' भाधिकारः पादान्तः ।

३ नामि ७
४ न तिसृ-चतसृ ५
५ छन्दस्युभयथा ६
६ नृ च
७ नोपधायाः १८
८ सर्वनामस्थाने चासंबुद्धौ ११,१४
९ वा षपूर्वस्य निगमे
१० सान्त-महतः संयोगस्य
११ अप्-तृन्-तृच्-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तॄणाम्
१२ इन्-हन्-पूषार्यम्णां शौ १३
१३ सौ च १४
१४ अत्वसन्तस्य चाधातोः
१५ अनुनासिकस्य क्वि-झलोः क्ङिति २१
१६ अज्झन-गमां सनि १७
१७ तनोतेर्विभाषा १८
१८ क्रमश्च क्त्वि
१९ च्छ्वोः शूडनुनासिके च २१,२०
२० ज्वर-त्वर-स्रिव्यवि-मवामुपधायाश्च
२१ राल्लोपः (१)
२२ असिद्धवदत्राभात् १७५
२३ श्नान्न लोपः ५५
२४ अनिदिता हल उपधायाः क्ङिति ३४
२५ दंश-सञ्ज-स्वञ्जां शपि २६
२६ रञ्जेश्च २७
२७ घञि च भाव-करणयोः २९
२८ स्यदो जवे
२९ अवोदैधौद्म-प्रश्रथ-हिमश्रथाः
३० नाञ्चेः पूजायाम् ३३
३१ क्त्वि स्कन्दि-स्यन्दोः ३२
३२ जान्त-नशां विभाषा ३३
३३ भञ्जेश्च चिणि
३४ शास इदङ्-हलोः ३५
३५ शा हौ ३६
३६ हन्तेर्जः
३७ अनुदात्तोपदेश-वनति-तनोत्यादीनामनुनासिकलोपो झलि क्ङिति ३९,४०
३८ वा ल्यपि
३९ न क्तिचि दीर्घश्च
४० गमः क्वौ (२)
४१ विड्वनोरनुनासिकस्यात् ४५
४२ जन-सन-खनां सञ्झलोः ४३
४३ ये विभाषा ४४
४४ तनोतेर्यकि
४५ सनः क्तिचि लोपश्चास्यान्यतरस्याम्
४६ आर्धधातुके ६९
४७ भ्रस्जो रोपधयो रमन्यतरस्याम्
४८ अतो लोपः ५४
४९ यस्य हलः ५०
५० क्यस्य विभाषा
५१ णेरनिटि ५७
५२ निष्ठायां सेटि
५३ जनिता मन्त्रे
५४ शमिता यज्ञे



६ नृ इति लुप्तषष्ठ्यन्तं पदम्, 'सुपां सुलुक्० ७।१।३९' इति सूत्रबलात् ।

५५ अयामन्ताल्वाय्येत्न्विष्णुषु ५७
५६ ल्यपि लघु-पूर्वात् ५९
५७ विभाषाऽऽपः
५८ यु-प्लुवोर्दीर्घश्छन्दसि ६१
५९ क्षियः ६१
६० निष्ठायामण्यदर्थे ( ३ ) ६१
६१ वाऽऽक्रोश-दैन्ययोः
६२ स्य-सिच्-सीयुट्-तासिषु भाव-कर्मणोरुपदेशेऽज्झन-ग्रह-दृशां वा चिण्वदिट् च
६३ दीङो युडचि क्ङिति ६४,६८
(वा०) वुग्युटावुवङ्-यणोः सिद्धौ वक्तव्यौ
६४ आतो लोप इटि च ६९
६५ ईद्यति ६६
६६ घु-मा-स्था-गा-पा-जहाति-सां हलि ६९
६७ एर्लिङि ६८
६८ वाऽन्यस्य संयोगादेः
६९ न ल्यपि ७०
७० मयतेरिदन्यतरस्याम्
७१ लुङ्-लङ् लृङ्क्ष्वडुदात्तः ७५,७२
७२ आडजादीनाम् ७५
७३ छन्दस्यपि दृश्यते
७४ न माङ्योगे
७५ बहुलं छन्दस्यमाङ्योगेऽपि ७६
७६ इरयो रे
७७ अचि श्नु-धातु-भ्रुवां य्वोरियङुवङौ १००,७८,८०
७८ अभ्यासस्यासवर्णे
७९ स्त्रियाः ८०
८० वाऽम्-शसोः ( ४ )
८१ इणो यण् ८७
८२ एरनेकाचोऽसंयोग-पूर्वस्य ८७
८३ ओः सुपि ८४
८४ वर्षाभ्वश्च
८५ न भू सुधियोः ८६
८६ छन्दस्युभयथा
८७ हु-श्नुवोः सार्वधातुके
८८ भुवो वुग् लुङ्-लिटोः
८९ ऊदुपधाया गोहः ९१,१००
९० दोषो णौ ९१,९४
९१ वा चित्त-विरागे
९२ मितां ह्रस्वः ९३
९३ चिण्-णमुलोर्दीर्घोऽन्यतरस्याम्
९४ खचि ह्रस्वः ९७
९५ ह्लादो निष्ठायाम्
९६ छादेर्घेऽद्व्युपसर्गस्य ९७
९७ इस्-मन्-त्रन्-क्विषु च
९८ गम-हन-जन-खन-घसां लोपः क्ङित्यनङि १००,१२६
९९ तनि-पत्योश्छन्दसि १००
१०० घसि-भसोर्हलि च ( ५ ) १०१
१०१ हु-झल्भ्यो हेर्धिः १०३
१०२ श्रु-शृणु-पॄ-कृ-वृभ्यश्छन्दसि १०३
१०३ अङितश्च
१०४ चिणो लुक् १०६
१०५ अतो हेः १०६
१०६ उतश्च प्रत्ययादसंयोग-पूर्वात् ११०,१०७

१०७ लोपश्चास्यान्यतरस्यां म्वोः १०९,१०८
१०८ नित्यं करोतेः १०९,११०
१०९ ये च
११० अत उत्सार्वधातुके ११९
१११ श्नसोरल्लोपः ११२
११२ श्नाभ्यस्तयोरातः ११३,११४
११३ ई हल्यघोः ११६
११४ इद्दरिद्रस्य ११६
११५ भियोऽन्यतरस्याम् ११७
११६ जहातेश्च ११८
११७ आ च हौ
११८ लोपो यि
११९ घ्वसोरेद्धावभ्यासलोपश्च १२१,१२६
१२० अत एकहल्मध्येऽनादेशादेर्लिटि (६) १२६,१२१
१२१ थलि च सेटि १२६
१२२ तॄ-फल-भज-त्रपश्च
१२३ राधो हिंसायाम्
१२४ वा जॄ-भ्रमु-त्रसाम् १२५
१२५ फणां च सप्तानाम्
१२६ न शस-दद-वादि-गुणानाम्
१२७ अर्वणस्त्रसावनञः १२८
१२८ मघवा बहुलम्
१२९ भस्य १७५
१३० पादः पत्
१३१ वसोः संप्रसारणम्
१३२ वाह ऊठ्
१३३ श्व-युव-मघोनामतद्धिते
१३४ अल्लोपोऽनः १४५,१३७
१३५ षपूर्व-हन्-धृतराज्ञामणि
१३६ विभाषा ङि-श्योः
१३७ न संयोगाद्वमन्तात्
१३८ अचः १३९
१३९ उद ईत्
१४० आतो धातोः (७)
१४१ मन्त्रेष्वाङ्यादेरात्मनः
१४२ ति विंशतेर्डिति १४३
१४३ टेः १४५
१४४ नस्तद्धिते १४९
१४५ अह्नष्टखोरेव
१४६ ओर्गुणः १४७
१४७ ढे लोपोऽकद्र्वाः १५५
१४८ यस्येति च १५०
१४९ सूर्य-तिष्यागस्त्य-मत्स्यानां य उपधायाः १५२,१५०
१५० हलस्तद्धितस्य १५२
१५१ आपत्यस्य च तद्धितेऽनाति १५२,१५३
१५२ क्य-च्व्योश्च
१५३ बिल्वकादिभ्यश्छस्य लुक्
१५४ तुरिष्ठेमेयःसु १६३
१५५ टेः

---

१२८ मघवा इति षष्ठ्यर्थे प्रथमा ( षष्ठी-विभक्तेः सुरादेशः । ततः 'सर्वनामस्थाने' दीर्घे, सुलोपे नलोपे मघवा इति )।
१४२ ति इति लुप्त-षष्ठ्यन्तम् पदम् । विंशतेः तेः लोपः डिति परे इत्यर्थः ।

१५६ स्थूल-दूर-युव-ह्रस्व-क्षिप्र-क्षुद्राणां यणादिपरं पूर्वस्य च गुणः
१५७ प्रिय-स्थिर-स्फिरोरु-बहुल-गुरु-वृद्ध-तृप्र-दीर्घ-वृन्दारकाणां प्र-स्थ-स्फ-वर्बंहि-गर्वर्षि-त्रप्-द्राघि-वृन्दाः
१५८ बहोर्लोपो भू च बहोः १५९
१५९ इष्ठस्य यिट् च
१६० ज्यादादीयसः (८)
१६१ र ऋतो हलादेर्लघोः १६२
१६२ विभाषर्जोश्छन्दसि
१६३ प्रकृत्यैकाच् १७०
१६४ इनण्यनपत्ये १६६,१७१
१६५ गाथि-विदथि-केशि-गणि-पणिनश्च
१६६ संयोगादिश्च
१६७ अन् १७०
१६८ ये चाभाव-कर्मणोः
१६९ आत्माध्वानौ खे
१७० न मपूर्वोऽपत्येऽवर्मणः
१७१ ब्राह्मोऽजातौ
१७२ कार्मस्ताच्छील्ये
१७३ औक्षमनपत्ये
१७४ दाण्डिनायन-हास्तिनायनाथर्वणि-कजैह्माशिनेय-वाशिनायनि-भ्रौणहत्य-धैवत्य-सारवैक्ष्वाक-मैत्रेय-हिरण्मयानि
१७५ ऋत्व्य-वास्त्व्य-वास्त्व-माध्वी-हिरण्मयानि च्छन्दसि

[1]अङ्गस्य [2]राल्लोपो वि[3]ड्वनो[4]वा क्रोशे[5]णो यण्हु[6]झल्भ्य[7]स्थलि च [8]मन्त्रेषु र[9] ऋतः पञ्चदश ॥

इति पाणिनीयसूत्रपाठे षष्ठाध्यायस्य चतुर्थः पादः अध्यायश्च ।

१६१ पृथुं मृदुं भृशं चैव कृशं च दृढमेव च ।
परिपूर्वं वृढं चैव षडेतान् र-विधौ स्मरेत् ॥
तेनेह न — मासमाचष्टे मातयति । एवं भ्रंशयति इत्यादि ।

# अथ सप्तमोऽध्यायः

## प्रथमः पादः

१ यु-वोरनाकौ
२ आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनाम् ५
३ झोऽन्तः ७
४ अदभ्यस्तात् ७
५ आत्मनेपदेष्वनतः
६ शीङो रुट् ८
७ वेत्तेर्विभाषा
८ बहुलं छन्दसि
९ अतो भिस ऐस् १७,११
१० बहुलं छन्दसि
११ नेदमदसोरकोः
१२ टा-ङसि-ङसामिनात्-स्याः
१३ ङेर्यः १४
१४ सर्वनाम्नः स्मै १७
१५ ङसि-ङ्योः स्मात्-स्मिनौ १६
१६ पूर्वादिभ्यो नवभ्यो वा
१७ जसः शी १९
१८ औङ आपः १९
१९ नपुंसकाच्च २०
२० जश्-शसोः शिः (१) २२
२१ अष्टाभ्य औश्
२२ षड्भ्यो लुक् २३
२३ स्वमोर्नपुंसकात् २६
२४ अतोऽम्
२५ अद्ड्-डतरादिभ्यः पञ्चभ्यः २६
२६ नेतराच्छन्दसि
२७ युस्मदस्मद्भ्यां ङसोऽश् ३३
२८ ङे प्रथमयोरम्
२९ शसो न
३० भ्यसो भ्यम् ३१

---

१ युवोः इति षष्ठीद्विवचनम्। सौत्रो वकारलोपः। अथवा युश्च वुश्च, तयोः समाहारः युवु इति। समाहारद्वन्द्वे युवुन इति प्राप्ते सौत्रं पुंस्त्वम्। इतः प्रत्ययस्यैवादेशागमौ 'गोः पादान्ते ७।१।५७' सूत्रान्तं यातः। ततो नुम् 'इदितो नुम् ७।१।५८' इति सूत्रादारभ्य 'दृक्-स्ववस्-स्वतवसां छन्दसि ७।१।८३' इत्यन्तं याति। ततः प्रकीर्णं पादान्तम्।

१३ ङेः इति षष्ठ्यन्तं पदम्।

२८ ङे इति लुप्तषष्ठ्यन्तं पदम् 'सुपां सुलुक् ७।१।३९' इति सूत्रबलात्। प्रथमयोरिति द्विवचनात् प्रथमाद्वितीययोरुभयोर्ग्रहणं ज्ञेयम्।

२९ न इति लुप्तप्रथमान्तम् 'सुपां सुलुक्० ७।१।३९' इति सूत्रबलात्। 'अलिङ्गे युष्मदस्मदी' इति नत्वाप्राप्तौ विधिः।

३१ **पञ्चम्या अत्** ३२
३२ एकवचनस्य च
३३ साम आकम्
३४ आत औ णलः
३५ तु-ह्योस्तातङ्ङाशिष्यन्यतरस्याम् ३७
३६ विदेः शतुर्वसुः
३७ **समासेऽनञ्पूर्वे क्त्वो ल्यप्** ३८
३८ क्त्वापि **च्छन्दसि** ५०
३९ सुपां सु-लुक् पूर्वसवर्णाच्छे-या-डा-ड्या-याजालः
४० अमो मश् ( २ )
४१ लोपस्त आत्मनेपदेषु
४२ ध्वमो ध्वात्
४३ यजध्वैनमिति च
४४ **तस्य** तात् ४५
४५ तप्-तनप्-तन-थनाश्च
४६ इदन्तो मसि
४७ **क्त्वो** यक् ४९
४८ इष्ट्वीनमिति च
४९ स्नात्व्यादयश्च
५० **आज्जसेरसुक्** ५२,५१
५१ अश्व-क्षीर-वृष-लवणानामात्म-प्रीतौ क्यचि
५२ **आमि** सर्वनाम्नः सुट् ५७
५३ त्रेस्त्रयः
५४ ह्रस्व-नद्यापो **नुट्** ५७
५५ षट्चतुर्भ्यश्च
५६ श्री-ग्रामण्योश्छन्दसि
५७ गोः पादान्ते

५८ इदितो **नुम्** धातोः ८३
५९ शे मुचादीनाम्
६० मस्जि-नशोर्झलि ( ३ )
६१ रधि-जभोरचि ६४
६२ नेटचलिटि रधेः
६३ रभेरशब्लिटोः ६४
६४ **लभेश्च** ६९
६५ आङो **यि** ६६
६६ उपात्प्रशंसायाम्
६७ **उपसर्गात् खल्-घञोः** ६८
६८ न सु-दुर्भ्यां केवलाभ्याम्
६९ विभाषा चिण्-णमुलोः
७० उगिदचां **सर्वनामस्थानेऽ-धातोः** ७२
७१ युजेरसमासे
७२ **नपुंसकस्य** झलचः ७७
७३ **इकोऽचि विभक्तौ** ७४,७५
७४ **तृतीयादिषु** भाषितपुंस्कं पुंवद् गालवस्य ७५
७५ **अस्थि-दधि-सक्थ्यक्ष्णा-मनङुदात्तः** ७७,७६
७६ **छन्दस्यपि** दृश्यते ७७
७७ ई च द्विवचने
७८ **नाभ्यस्ताच्छतुः** ७९,८१
७९ **वा** नपुंसकस्य ८०
८० आच्छी-नद्योर्नुम् ( ४ ) ८१,८२
८१ शप्-श्यनोर्नित्यम्
८२ **सावनडुहः** ८५
८३ दृक्-स्ववस्-स्वतवसां छन्दसि
८४ **दिव औत्**

८५ पथि-मथ्यृभुक्षामात् ८८
८६ इतोऽत् सर्वनामस्थाने ९८
८७ थो न्थः
८८ भस्य टेर्लोपः
८९ पुंसोऽसुङ्
९० गोतो णित् ९२
९१ णलुत्तमो वा
९२ सख्युरसंबुद्धौ ९३,९५
९३ अनङ् सौ ९४
९४ ऋदुशनस्-पुरुदंसोऽनेहसां च
९५ तृज्वत् क्रोष्टुः ९७
९६ स्त्रियां च
९७ विभाषा तृतीयादिष्वचि
९८ चतुरनडुहोरामुदात्तः ९९
९९ अम् संबुद्धौ
१०० ऋत इद् धातोः (५) १०३,१०१,१०३
१०१ उपधायाश्च
१०२ उदोष्ठ्यपूर्वस्य १०३
१०३ बहुलं छन्दसि

[१]युवोर[२]ष्टाभ्यो[३] लोपोऽर्धि[४] शप्श्यनोरु[५]पधायास्त्रीणि ॥

इति पाणिनीयसूत्रपाठे सप्तमस्याध्यायस्य प्रथमः पादः

## द्वितीयः पादः

१ सिचि वृद्धिः परस्मैपदेषु ७
२ अतो ल्रान्तस्य
३ वद-व्रज-हलन्तस्याचः ४
४ नेटि ७
५ ह्म्यन्त-क्षण-श्वस-जागृ-णि-श्व्येदिताम्
६ ऊर्णोतेर्विभाषा ७
७ अतो हलादेर्लघोः
८ नेड् वशि कृति ३४,९
९ ति-तु-त्र-त-थ-सि-सु-सर-कसेषु च
१० एकाच उपदेशेऽनुदात्तात् ११
११ श्र्युकः किति १२
१२ सनि ग्रह-गुहोश्च
१३ कृ-सृ-भृ-वृ-स्तु-द्रु-स्रु-श्रुवो लिटि
१४ श्वीदितो निष्ठायाम् ३४
१५ यस्य विभाषा
१६ आदितश्च १७
१७ विभाषा भावादिकर्मणोः
१८ क्षुब्ध-स्वान्त-ध्वान्त-लग्न-म्लिष्ट-विरिब्ध-फाण्ट-बाढानि मन्थ-मनस्तमः-सक्ताविस्पष्ट-स्वरा-नायास-भृशेषु
१९ धृषि-शसी वैयात्ये

---

९२ 'सर्वनामस्थाने' इति अनुवृत्तम् 'असम्बुद्धौ' इति सूत्रस्थम् उभयमपि प्रथमान्तं विपरिणम्यते ।

१ सिज्वृद्धिः—'अतो हलादेर्लघोः ७।२।७' इति यावत् । ततोऽनिट् (८-३४) । तत इट् ( ३५-७८ ) । ततः प्रकीर्णं पञ्च-सूत्री । ततः प्रकृतिकार्यं प्रत्यये परे ( ८४-११८ ) पादान्तम् ।

२० दृढः स्थूल-बलयोः (१)
२१ प्रभौ परिवृढः
२२ कृच्छ्र-गहनयोः कषः
२३ घुषिरविशब्दने
२४ अर्देः सं-नि-विभ्यः २५
२५ अभेश्चाविदूर्ये
२६ णेरध्ययने वृत्तम् २७
२७ वा दान्त-शान्त-पूर्ण-दस्त-स्पष्ट-च्छन्न-ज्ञप्ताः २९
२८ रुष्यम-त्वर-संघुषास्वनाम्
२९ हृषेर्लोमसु
३० अपचितश्च
३१ ह्रु ह्वरेश्छन्दसि ३४
३२ अपरिह्वृताश्च
३३ सोमे ह्वरितः
३४ ग्रसित-स्कभित-स्तभितोत्तभित-चत्त-विकस्ता विशस्तृ-शंस्तृ-शास्तृ-तरुतृ-तरूतृ-वरुतृ-वरूतृ-वरूत्री-रुज्ज्वलिति-क्षरिति-वमित्यमि-तीति च
३५ आर्धधातुकस्येड् वलादेः ७५,७८
३६ स्नु-क्रमोरनात्मनेपदनिमित्ते
३७ ग्रहोऽलिटि दीर्घः ३८,४०
३८ वृतो वा ४२
३९ न लिङि ४०
४० सिचि च परस्मैपदेषु (२)
४१ इट् सनि वा ४३
४२ लिङ्-सिचोरात्मनेपदेषु ४३
४३ ऋतश्च संयोगादेः
४४ स्वरति-सूति-सूयति-धूञूदितो वा ५१
४५ रधादिभ्यश्च
४६ निरः कुषः ४७
४७ इण्निष्ठायाम्
४८ तीष-सह-लुभ-रुष-रिषः
४९ सनीवन्तर्ध-भ्रस्ज-दम्भु-श्रि-स्वृ-यूर्णु-भर-ज्ञपि-सनाम्
५० क्लिशः क्त्वा-निष्ठयोः ५४
५१ पूङश्च
५२ वसति-क्षुधोरिट्
५३ अञ्चेः पूजायाम्
५४ लुभो विमोहने
५५ जॄ-व्रश्च्योः क्त्वि ५६
५६ उदितो वा ५७
५७ सेऽसिचि कृत-चृत-च्छृद-तृद-नृतः ६०
५८ गमेरिट् परस्मैपदेषु ६०
५९ न वृद्भ्यश्चतुर्भ्यः ६५
६० तासि च क्लृपः (३) ६३
६१ अचस्तास्वत्थल्यनिटो नित्यम् ६६,६३
६२ उपदेशेऽत्वतः

३५ इटोऽनुगमः—'लिटस्थवमसेध्वानां स्यसीयुट्तास्सिचां सनः ।
कृसृभृवृस्तुद्रुस्रुश्रुवर्ज्यं लिटां वलादेरिड् विधीयते ।।'
४७ इट् इत्यनुवर्तमाने नित्यार्थं पुनरिडुक्तिः ।

६३ ऋतो भारद्वाजस्य
६४ बभूथा-ततन्थ-जगृम्भ-ववर्थेति निगमे
६५ विभाषा सृजि-दृशोः
६६ इडत्त्यर्ति-व्ययतीनाम्
६७ **वस्वे**काजाद्घसाम् ६९
६८ विभाषा गम-हन-विद-विशाम्
६९ सनि-ससनिवांसम्
७० ऋद्धनोः स्ये
७१ अञ्जेः **सिचि** ७३
७२ स्तु-सू-धूञ्भ्यः **परस्मैपदेषु** ७३
७३ यम-रम-नमातां सक् च
७४ स्मि-पूङ्-रञ्ज्वशां **सनि** ७५
७५ किरश्च पञ्चभ्यः
७६ रुदादिभ्यः **सार्वधातुके** ८१
७७ ईशः **से** ७८
७८ ईड-जनोर्ध्वे च
७९ लिङः स-लोपोऽनन्त्यस्य
८० **अतो येयः** ( ४ ) ८२,८१
८१ आतो ङितः
८२ **आने** मुक् ८३
८३ ईदासः
८४ अष्टन **आ विभक्तौ** ८९,११३
८५ रायो हलि
८६ **युष्मदस्मदोरनादेशे** ९८,८९
८७ द्वितीयायां च
८८ प्रथमायाश्च द्विवचने भाषायाम्
८९ योऽचि
९० शेषे लोपः
९१ **मपर्यन्तस्य** ९८
९२ युवावौ द्विवचने
९३ यूय-वयौ जसि
९४ त्वाहौ सौ
९५ तुभ्य-मह्यौ ङयि
९६ तव-ममौ ङसि
९७ **त्व-मावेकवचने** ९८
९८ प्रत्ययोत्तरपदयोश्च
९९ त्रि-चतुरोः स्त्रियां तिसृ-चतसृ
१०० **अचि** र ऋतः ( ५ ) १०१
१०१ जराया जरसन्यतरस्याम्
१०२ त्यदादीनामः
१०३ **किमः** कः १०५
१०४ कु ति-होः
१०५ क्वाति

---

६३ अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् ।
ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ॥
६६ इट् इत्यनुवर्तमाने पुनरिडुक्तिः विभाषानिरोधार्थम् ।
६७ 'वसु' इति लुप्तसप्तमी । एकाच् आत् घसां धातूनां वसौ इट् इत्यर्थः ।
८४ अत्रोत्तरसूत्रात् 'हलि' इत्याकृष्य हलादौ विभक्तौ इति ।
९० लोपानुगमः—पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि ।
यान्यद्विवचनान्यत्र शेषे लोपो विधीयते ॥
१०४ 'ति' इति इकार उच्चारणार्थः, तादौ हादौ विभक्तौ इति ।

१०६ तदोः सः सावनन्त्ययोः १०८
१०७ अदस औ सुलोपश्च
१०८ **इदमो मः** ११३,१०९
१०९ दश्च
११० यः सौ १११
१११ **इदोऽय् पुंसि** ११३
११२ अनाप्यकः
११३ हलि लोपः
११४ मृजेर्वृद्धिः ७।३।३५
११५ **अचो ञ्णिति** ७।३।३१;३५
११६ अत उपधायाः
११७ **तद्धितेष्वचामादेः** ७।३।३१
११८ किति च

[1]सिचि [2]प्रभाविट्[3] सन्य[4]चस्तास्वदा[5]-
तो [6]जराया अष्टादश ॥

**इति पाणिनीयसूत्रपाठे सप्तमाध्यायस्य द्वितीयः पादः ।**



## तृतीयः पादः

१ देविका-शिंशपा-दित्यवाड्-दीर्घ-सत्र-श्रेयसामात्
२ केकय-मित्रयु-प्रलयानां यादेरियः
३ **न य्-वाभ्यां** पदान्ताभ्यां **पूर्वौ तु ताभ्यामैच्** ५,४
४ द्वारादीनां च
५ न्यग्रोधस्य च केवलस्य
६ **न** कर्म-व्यतिहारे ९
७ स्वागतादीनां च
८ श्वादेरिञि ९
९ पदान्तस्यान्यतरस्याम्
१० **उत्तरपदस्य** ३१
११ अवयवादृतोः
१२ **सु-सर्वार्धाज्जनपदस्य** १३
१३ **दिशोऽमद्राणाम्** १४
१४ प्राचां ग्राम-नगराणाम्
१५ **संख्यायाः** संवत्सर-संख्यस्य च १७

---

१०६ सुवन्त-तिङन्तपदानि उपर्यधः क्रमेण सर्वाण्येकवचनानि ततो द्विवचनानि सर्वाणि क्रमशो वाच्यानि । तत्रैव सौविध्यम्—
नाम्नामुपर्यधो-मार्गात्सर्वादि-युष्मदस्मदाम् ।
पदानि क्रमवाच्यानि सर्वैकद्व्यादिसौष्ठवात् ॥ तथाहि—
सः तम् तेन तस्मै तस्मात् तस्य तस्मिन् । तौ २ ताभ्याम् ३ तयोः २ । ते तान् तैः तेभ्यः २ तेषाम् तेषु । त्यदादेः सम्बोधनं नास्ति ।

१ वृद्धेः विविधं कार्यम् 'पदान्तस्यान्यतरस्याम् ७।३।९' इति यावत् । तत उत्तर-पदवृद्धिः ( १०-३१ ) । ततो ञ्णिति कार्यम् ( ३२-३५ ) । तत आगमः ( ३६-४० ) । तत आदेशः (४१-८१) । ततो गुणः (८२-८६) । ततः सार्वधातुके प्रकृति-प्रत्ययम् ( ८७-१०१ ) । ततः सुपि प्रकृति-प्रत्यय-कृत्यम् पादान्तम् ( १०२-१२० ) ।

१६ वर्षस्याभविष्यति
१७ परिमाणान्तस्याऽसंज्ञा-शाणयोः
१८ जे प्रोष्ठपदानाम्
१९ हृद्-भग-सिन्ध्वन्ते **पूर्वपदस्य** च २५
२० अनुशतिकादीनां च ( १ )
२१ **देवता-द्वन्द्वे** च २३
२२ **नेन्द्रस्य** परस्य २३
२३ दीर्घाच्च वरुणस्य
२४ प्राचां नगरान्ते
२५ जङ्गल-धेनु-वलजान्तस्य विभाषित-मुत्तरम्
२६ **अर्धात् परिमाणस्य पूर्वस्य तु वा** २७,३१,३०
२७ नातः परस्य
२८ **प्रवाहणस्य ढे** २९
२९ तत्प्रत्ययस्य च
३० **नञः** शुचीश्वर-क्षेत्रज्ञ-कुशल-निपुणानाम् ३१
३१ यथातथ-यथापुरयोः पर्यायेण
३२ हनस्तोऽचिण्-णलोः
३३ आतो युक् **चिण्-कृतोः** ३५
३४ **नोदात्तोपदेशस्य** मान्तस्याना-चमेः ३५
३५ जनि-वध्योश्च
३६ अर्ति-ह्री-व्ली-री-क्नूयी-क्ष्मा-य्यातां पुग्णौ ४३
३७ शा-च्छा-सा-ह्वा-व्या-वे-पां युक्

( वा० ) पातेर्णौ लुग्वक्तव्यः
३८ वो विधूनने जुक्
३९ ली-लोर्नुग्लुकावन्यतरस्यां स्नेह-विपातने
४० भियो हेतुभये षुक् ( २ )
४१ स्फायो वः
४२ शदेरगतौ तः
४३ रुहः पोऽन्यतरस्याम्
४४ प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः ४९,४८
४५ न या-सयोः
४६ **उदीचामातः स्थाने** य-क-पूर्वायाः ४८,४९
४७ भस्त्रैषा-जा-ज्ञा-द्वा-स्वा-नञ्पूर्वा-णामपि
४८ **अभाषितपुंस्काच्च** ४९
४९ आदाचार्याणाम्
५० **ठस्येकः** ५१
५१ इसुसुक्-तान्तात् कः
५२ **चजोः कु** घिण्ण्यतोः ६९
५३ न्यङ्क्वादीनां च
५४ **हो हन्तेर्ञ्णिन्नेषु** ५५,५६
५५ **अभ्यासाच्च** ५८
५६ हेरचङि
५७ **सन्-लिटोर्जेः** ५८
५८ विभाषा चेः

---

३६ अत्र लाक्षणिकस्यापि आतो ग्रहणम्, न तु औपदेशिकमात्रम् । तेन 'क्रीङ्जीनां णौ ६।१।४८' इति कृतात्वानामपि पुकि अध्यापयतीत्यादि प्रयोगाः ।

५९ **न** क्वादेः ६९
६० अजि-व्रज्योश्च ( ३ )
६१ भुज-न्युब्जौ पाण्युपतापयोः
६२ प्रयाजानुयाजौ यज्ञाङ्गे
६३ वञ्चेर्गतौ
६४ ओक उचः के
६५ **ण्य** आवश्यके ६९
६६ यज-याच-रुच-प्रवचर्चश्च
(वा०) त्यजेश्च
६७ वचोऽशब्दसंज्ञायाम्
६८ प्रयोज्य-नियोज्यौ शक्यार्थे
६९ भोज्यं भक्ष्ये
७० **घोर्लोपो** लेटि वा ७२
७१ ओतः श्यनि
७२ **क्सस्याचि** ७३
७३ लुग्वा दुह-दिह-लिह-गुहामात्मने-पदे दन्त्ये
७४ शमामष्टानां **दीर्घः** श्यनि ७६
७५ ष्ठिवु-क्लमु-चमां **शिति** ८२
७६ क्रमः परस्मैपदेषु
७७ इषु-गमि-यमां छः
७८ पा-घ्रा-ध्मा-स्था-म्ना-दाण्-दृश्यर्ति-सर्ति-शद-सदां पिब-जिघ्र-धम-तिष्ठ-मन-यच्छ-पश्यर्च्छ-धौ-शीय-सीदाः
७९ ज्ञा-जनोर्जा
८० प्वादीनां **ह्रस्वः** (४) ८१
८१ मीनातेर्निगमे
८२ मिदेर्गुणः ८८
८३ जुसि च
८४ **सार्वधातुकार्धधातुकयोः** ८६
८५ जाग्रोऽवि-चिण्-णल्-ङित्सु
८६ **पुगन्त-लघूपधस्य** च ८७
८७ **नाभ्यस्तस्याचि पिति सार्व-धातुके** ८८,९४,१०१
८८ भू-सुवोस्तिङि
८९ उतो **वृद्धिर्लुकि हलि** ९०,१००
९० **ऊर्णोतेर्विभाषा** ९१
९१ गुणोऽपृक्ते
९२ तृणह इम्
९३ ब्रुव **ईट्** ९८
९४ यङो **वा** ९५
९५ तु-रु-स्तु-शम्यमः सार्वधातुके

---

५९ 'न' इति योगविभागः। तेन रोमाञ्च इत्यादि । शोच्यमिति ण्यति कुत्वाभावः ।

८७ धातुपदान्यपि उत्तराधरमार्गेण पुरुषत्रयंऽप्येकवचनम् पूर्वं, ततो द्विवचन-बहुवचने । पद्यम् यथा—'पुमेकद्व्यादिमार्गेण धातुजानि पदान्यपि ।
गुणागुण-विभागेन च्छात्रः सुविधया वदेत् ॥' तथाहि—
( १ ) नेनेक्ति नेनेक्षि नेनेज्मि । ( २ ) नेनिक्तः नेनिक्थः नेनिज्वः ।
( ३ ) नेनिजति नेनिक्थ नेनिज्मः । इति महत्सौविध्यम् ।



९५ पुनः सार्वधातुकग्रहणमपिदर्थम् ।

९६ अस्ति सिचोऽपृक्ते ९७,१००
९७ बहुलं छन्दसि
९८ रुदश्च पञ्चभ्यः ९९
९९ अड् गार्ग्य-गालवयोः १००
१०० अदः सर्वेषाम् (५)
१०१ अतो दीर्घो यञि १०४,१०२
१०२ सुपि च १०३
१०३ बहुवचने झल्येत् १०६
१०४ ओसि च १०५
१०५ आङि चापः १०६
१०६ संबुद्धौ च १०८
१०७ अम्बार्थ-नद्योर्ह्रस्वः
१०८ ह्रस्वस्य गुणः १०९,१११
१०९ जसि च
११० ऋतो ङि-सर्वनामस्थानयोः
१११ घेर्ङिति ११५
११२ आण्नद्याः
११३ याडापः ११४
११४ सर्वनाम्नः स्याड्ढ्रस्वश्च ११५
११५ विभाषा द्वितीया-तृतीयाभ्याम्
११६ ङेराम् नद्याम्नीभ्यः ११९,११७
११७ इदुद्भ्याम् ११८
११८ औत् ११९
११९ अच्च घेः १२०
१२० आङो नाऽस्त्रियाम् (६)

[1]देविका [2]देवता [3]स्फायो [4]भुज-मी [5]
नातेर [6]तो दीर्घो विंशतिः॥

इति पाणिनीयसूत्रपाठे सप्तमाध्यायस्य तृतीयः पादः ।

## चतुर्थः पादः

१ णौ चङ्युपधाया ह्रस्वः ८,३
२ नाग्लोपि-शास्वृदिताम्
३ भ्राज-भास-भाष-दीप-जीव-मील-पीडामन्यतरस्याम्
४ लोपः पिबतेरीच्चाभ्यासस्य
५ तिष्ठतेरित् ६
६ जिघ्रतेर्वा ७
७ उरृत् ८
८ नित्यं छन्दसि
९ दयतेर्दिगि लिटि ११
१० ऋतश्च संयोगादेर्गुणः १२
११ ऋच्छत्यॄताम्
१२ शॄ-दॄ-प्रां ह्रस्वो वा १५

---

११२ ङितीत्यनुवृत्तं पञ्चम्यन्ततया विपरिणम्यते ङित इति ।
१२० आङ्वन्ति सूत्राणि औङ्वन्ति च न पाणिनीयानि, प्राक्तनान्येव । एवं 'भूवादयो धातवः १।३।१' इत्यादीनि बहूनि 'इकां यण्भिर्व्यवधानं व्याडिगालवयोः' इति सिद्धान्यपाणिनीयान्येव । भूश्च वाश्चेत्यादिकल्पना मनोविनोदिनी ।



१ सप्तपञ्चाशत यावत् प्रकृति-प्रत्यय-कृतिः ।
अङ्ग-कार्यं ततोऽभ्यास-कृत्यं स्यात्सप्तमान्तिमे ॥

१३ केऽणः १४
१४ न कपि १५
१५ आपोऽन्यतरस्याम्
१६ ऋ-दृशोऽङि गुणः २०
१७ अस्यतेस्थुक्
१८ श्वयतेरः
१९ पतः पुम्
२० वच उम् (१)
२१ शीङः सार्वधातुके गुणः २२
२२ अयङ् यि क्ङिति २९,२५
२३ उपसर्गाद्ध्रस्व ऊहतेः २४
२४ एतेर्लिङि
२५ अकृत्-सार्वधातुकयोर्दीर्घः २९,२६
२६ च्वौ च २७
२७ रीङृतः ३०
२८ रिङ् श-यग्-लिङ्क्षु २९
२९ गुणोऽर्ति-संयोगाद्योः ३०
३० यङि च ३१
३१ ई घ्रा-ध्मोः ३३
३२ अस्य च्वौ ३५
३३ क्यचि च ३९
३४ अशनायोदन्य-धनाया बुभुक्षा-पिपासा-गर्धेषु
३५ न च्छन्दस्यपुत्रस्य ३९
३६ दुरस्युर्द्रविणस्युर्वृषण्यति-रिषण्यति
३७ अश्वाघस्यात् ३८
३८ देव-सुम्नयोर्यजुषि काठके
३९ कव्यध्वर-पृतनस्यर्चि लोपः
४० द्यति-स्यति-मा-स्थामित् ति किति (२) ४१,४७
४१ शा-च्छोरन्यतरस्याम्
४२ दधातेर्हिः ४४
४३ जहातेश्च क्त्वि ४४
४४ विभाषा छन्दसि ४५
४५ सुधित-वसुधित-नेमधित-धिष्व-धिषीय च
४६ दो दद् घोः ४७
४७ अच उपसर्गात् तः ४९
४८ अपो भि
४९ सः स्यार्धधातुके ५२,५७
५० तासस्त्योर्लोपः ५२,५३
५१ रि च
५२ ह एति
५३ यीवर्णयोर्दीधी-वेव्योः
५४ सनि मी-मा-घु-रभ-लभ-शक-पत-पदामच इस् ५७,५६
५५ आप्-ज्ञप्यृधामीत् ५६
५६ दम्भ इच्च
५७ मुचोऽकर्मकस्य गुणो वा
५८ अत्र लोपोऽभ्यासस्य ९७
५९ ह्रस्वः
६० हलादिः शेषः (३) ६१
६१ शर्पूर्वाः खयः
६२ कुहोश्चुः ६४
६३ न कवतेर्यङि ६४
६४ कृषेश्छन्दसि ६५

---

४९ सि + आर्धधातुके = सादी आर्धधातुके इति।
५३ यि-इवर्ण इति छेदः।

६५ दाधर्ति-दर्धर्ति-दर्धर्षि-बोभूतु-तेतिक्तेऽलर्ष्यापनीफणत्-संसनिष्यदत्-करिक्रत्-कनिक्रदद्-भरिभ्रद्-दविध्वतो-दविद्युतत्-तरीत्रतः-सरीसृपतं-वरीवृजत्-मर्मृज्यागनीगन्तीति च

६६ उरत्

६७ द्युति-स्वाप्योः **सम्प्रसारणम्** ६८

६८ व्यथो **लिटि** ७४

६९ **दीर्घ** इणः किति ७०

७० अत आदेः

७१ **तस्मान्नुड्** द्विहलः ७२

७२ अश्नोतेश्च

७३ भवतेरः ७४

७४ ससूवेति निगमे

७५ निजां **त्रयाणां** गुणः **श्लौ** ७६,७८

७६ **भृञामित्** ८१

७७ अर्ति-पिपर्त्योश्च

७८ बहुलं छन्दसि

७९ **सन्यतः** ८१

८० ओः **पु-यण्-ज्यपरे** ( ४ ) ८१

८१ स्रवति-शृणोति-द्रवति-प्रवति-प्लवति-च्यवतीनां वा

८२ गुणो **यङ्-लुकोः** ९०

८३ दीर्घोऽकितः

८४ नीग्-वञ्चु-स्रंसु-ध्वंसु-भ्रंसु-कस-पत-पद-स्कन्दाम्

८५ नुगतोऽनुनासिकान्तस्य ८७

( वा० ) पदान्ताच्चेति वक्तव्यम्

८६ जप-जभ-दह-दश-भञ्ज-पशां च

८७ **चर-फलोश्च** ८७

८८ **उत्**परस्यातः ८९

८९ ति च

९० **रीगृदुपधस्य** च ९२,९१

( वा० ) रीगृत्वत इति वक्तव्यम्

९१ **रुग्रिकौ च लुकि** ९२

९२ ऋतश्च

९३ सन्वल्लघुनि **चङ्परेऽनग्लोपे** ९४,९७

९४ दीर्घो लघोः

९५ **अत्** स्मृ-दृ-त्वर-प्रथ-म्रद-स्तॄ-स्पशाम् ९७

९६ विभाषा वेष्टि-चेष्टचोः

९७ ई च गणः

णौ [१]च शीङः [२] शाच[३]छो [४]शपूर्वाः [५]स्रवति सप्तदश ॥

इति पाणिनीयसूत्रपाठे सप्तमाध्यायस्य चतुर्थः पादः अध्यायश्च ।

---

९७ अजीगणद्दाशरथं न वाक्यं यदा स दर्पेण तदा कुमारः—भट्टिः । ( अङ्गाधिकृतिः समाप्ता ) ।

# अथाष्टमोऽध्यायः

## प्रथमः पादः

१ **सर्वस्य द्वे** १५
२ तस्य परमाम्रेडितम् ३
३ अनुदात्तं च
४ नित्य-वीप्सयोः
५ परेर्वर्जने
६ प्र-समुपोदः पादपूरणे
७ उपर्यध्यधसः सामीप्ये
८ वाक्यादेरामन्त्रितस्यासूयाऽसंमति-कोप-कुत्स्न-भर्त्सनेषु
९ एकं **बहुव्रीहिवत्** १०
१० आवाधे च
११ **कर्मधारयवदुत्तरेषु** १५
१२ प्रकारे गुणवचनस्य
( वा० ) डाचि विवक्षिते द्वे वहुलम्
( वा० ) कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्
( वा० ) स्त्री-नपुंसकयोरुत्तरपदस्य चाम्भावो वक्तव्यः
१३ अकृच्छ्रे प्रिय-सुखयोरन्यतरस्याम्
१४ यथास्वे यथायथम्
१५ द्वन्द्वं रहस्य-मर्यादा-वचन-व्युत्क्रमण-यज्ञपात्रप्रयोगाभिव्यक्तिषु
१६ **पदस्य** ८।३।५४
१७ **पदात्** ६९
१८ **अनुदात्तं सर्वमपादादौ** ७४
१९ आमन्त्रितस्य च
२० **युष्मदस्मदोः षष्ठी-चतुर्थी-द्वितीयास्थयो**-र्वान्नावौ ( १ ) २६,२२
२१ वहुवचनस्य वस्-नसौ
२२ ते-मयावे**कवचनस्य** २३
२३ त्वा-मौ द्वितीयायाः
२४ **न** च-वा-हाहैव-युक्ते २६
२५ पश्यार्थैश्चानालोचने
२६ सपूर्वायाः प्रथमाया विभाषा
२७ तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययो

---

१ पिशाचप्रश्ने पण्डितोत्तरम्—'सर्वस्य द्वे' सुमति-कुमती सम्पदापत्ति-हेतू, 'एको गोत्रे' स भवति पुमान् यः कुटुम्बं विभर्ति। 'वृद्धो यूना' ऽभ्युदय-मतिना श्रद्धया सेवनीयः, 'स्त्री पुंवच्च' प्रभवति यदा तद्धि गेहं विनष्टम्॥
४ आभीक्ष्ण्यं नित्यता सा च तिङव्यय-कृत्सु। पचति पचतीति। युगपद् व्याप्तुमिच्छा वीप्सा, सा च सुप्सु। गृहे-गृहे गावः। इति।
१६ पादे तृतीयेऽस्याध्यायस्य 'इडाया वा ८।३।५४' इति यावत्।
१७ 'कुत्सने० ६९' इत्यन्तम्।
१७ पदात् पदस्य विज्ञानमुत्तरोत्तरमेधते। सपादसप्तमं वीक्ष्य त्रिपादी प्रपलायते॥

२८ तिङ्ङतिङः ६६
२९ न लुट् ६६
३० निपातैर्यद्यदि-हन्त-कुविन्-नेच्-चेच्-चण्-कच्चिद्-यत्र-युक्तम्
३१ नह प्रत्यारम्भे
३२ सत्यं प्रश्ने
३३ अङ्गाप्रातिलोम्ये ३४
३४ हि च ३५
३५ छन्दस्यनेकमपि साकाङ्क्षम्
३६ यावद्यथाभ्याम् ३८
३७ पूजायां नानन्तरम् ३८
३८ उपसर्गव्यपेतं च
३९ तु-पश्य-पश्यताहैः पूजायाम् ४०
४० अहो च ( २ ) ४१
४१ शेषे विभाषा ४२
४२ पुरा च परीप्सायाम्
४३ नन्वित्यनुज्ञैषणायाम्
४४ किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ४५
४५ लोपे विभाषा
४६ एहि मन्ये प्रहासे लृट्
४७ जात्वपूर्वम् ४९
४८ किंवृत्तं च चिदुत्तरम्
४९ आहो उताहो चानन्तरम् ५०
५० शेषे विभाषा ०
५१ गत्यर्थ-लोटा लृण्-न-चेत्कारकं सर्वान्यत् ५३
५२ लोट् च ५४
५३ विभाषितं सोपसर्गमनुत्तमम् ५४
५४ हन्त च
५५ आम एकान्तरमामन्त्रितमनन्तिके
५६ यद्धि-तु-परं छन्दसि
५७ चन-चिदिव-गोत्रादि-तद्धिताम्रेडितेष्वगतेः ५८
५८ चादिषु च
५९ च-वा-योगे प्रथमा ६५
६० हेति क्षियायाम् ( ३ ) ६८
६१ अहेति विनियोगे च
६२ चाहलोप एवेत्यवधारणम्
६३ चादिलोपे विभाषा ६५
६४ वै-वावेति च च्छन्दसि ६५
६५ एकान्याभ्यां समर्थाभ्याम्
६६ यद्वृत्तान्नित्यम्
६७ पूजनात् पूजितमनुदात्तं काष्ठादिभ्यः ६८
६८ सगतिरपि तिङ् ६९
६९ कुत्सने च सुप्यगोत्रादौ
७० गतिर्गतौ ७१
७१ तिङि चोदात्तवति
७२ आमन्त्रितं पूर्वमविद्यमानवत् ७४
७३ नामन्त्रिते समानाधिकरणे सामान्यवचनम् ७४
७४ विभाषितं विशेषवचने

[१]सर्वस्य [२]बहुवचनस्य [३]शेषे[४]ऽहेति चतुर्दश ॥

इति पाणिनीयसूत्रपाठे अष्टमाध्यायस्य प्रथमः पादः ।

## द्वितीयः पादः

१ **पूर्वत्रासिद्धम्** ८।४।६८
२ नलोपः सुप्-स्वर-संज्ञा-तुग्विधिषु कृति
३ न मु ने
(वा०) निष्ठादेशः षत्व-स्वर-प्रत्ययेड्-विधिषु सिद्धो वक्तव्यः
४ उदात्त-स्वरितयोर्यणः स्वरितोऽनुदात्तस्य ६
५ **एकादेश उदात्तेनो**दात्तः ६
६ स्वरितो वाऽनुदात्ते पदादौ
७ **नलोपः प्रातिपदिकान्तस्य** ८
८ न ङि-सम्बुद्ध्योः
(वा०) वा नपुंसकानाम्
९ मादुपधायाश्च **मतोर्वो**ऽयवादिभ्यः १६,१५
१० झयः
११ **संज्ञायाम्** १६
१२ आसन्दीवदष्ठीवच्चक्रीवत्-कक्षीवद्रुमण्वच्चर्मण्वती
१३ उदन्वानुदधौ च
१४ राजन्वान्सौराज्ये
१५ छन्दसीरः १७
१६ अनो **नुट्** १७
१७ नाद् घस्य
१८ **कृपो रो लः** २२
१९ उपसर्गस्यायतौ
२० **ग्रो** यङि (१) २१
२१ अचि **विभाषा** २२
२२ परेश्च घाङ्कयोः
२३ **संयोगान्तस्य लोपः** २४,२९
(वा०) यणः प्रतिषेधो वाच्यः
२४ रात् सस्य २८
२५ धि च
२६ झलो झलि ३८
२७ ह्रस्वादङ्गात्
२८ इट ईटि

---

१ पूर्वत्रासिद्धमित्येष पाणिनि—न्यायदोऽद्भुतः ।
स्वानेवासिद्धयन्नर्चन्नतिथीन् स्वीयकार्यकृत् ॥

( अष्टाध्यायीपाठकाः 'पूर्वत्र इतः पूर्वसूत्रेषु परम् पादत्रयम् असिद्धम् । यदा अधिकारोऽयं पर-सूत्रे गच्छति तदापि तत्र वक्ति पूर्वत्र परं सूत्रम् असिद्धम् इति, अतश्च त्रिपाद्यामपि पूर्वं प्रति परम् असिद्धम्' इति तु अधिकारसूत्रमिदम् इति ज्ञानेनैव जानन्ति । कथं वृत्तिघोषणं कुर्युः । इत्यतो ज्ञायते वृत्तिघोषणं पाणिनिसंकल्पविरुद्धमिति पापकृत् । )

९ मात् इति स्वतन्त्रम्, उपधायाः विशेषणं च । मश्च अश्च तयोः समाहारः मम्, तस्मात् इति पञ्चम्यन्तम् । 'अ' इति सवर्णबोधकतया अ, आ इत्युभयं गृह्णाति ।

२९ स्कोः संयोगाद्योरन्ते च ३८
३० चोः कुः
३१ हो ढः ३५
३२ दादेर्धातोर्घः ३८,३३
३३ वा द्रुह-मुह-ष्णुह-ष्णिहाम्
३४ नहो धः
३५ आहस्थः
३६ व्रश्च-भ्रस्ज-सृज-मृज-यज-राज-भ्राज-च्छ-शां षः
(वा०) परौ व्रजेः षः पदान्ते
३७ एकाचो बशो भष् झषन्तस्य स्ध्वोः ३८
३८ दधस्त-थोश्च
३९ झलां जशोऽन्ते
४० झषस्त-थोर्धोऽधः ( २ )
४१ षढोः कः सि
४२ र-दाभ्यां निष्ठातो नः पूर्वस्य च दः ६१
४३ संयोगादेरातो धातोर्यण्वतः
४४ ल्वादिभ्यः
४५ ओदितश्च
४६ क्षियो दीर्घात्
४७ श्योऽस्पर्शे
४८ अञ्चोऽनपादाने
४९ दिवोऽविजिगीषायाम्
५० निर्वाणोऽवाते
५१ शुषः कः
५२ पचो वः
५३ क्षायो मः ५४
५४ प्रस्त्योऽन्यतरस्याम्
५५ अनुपसर्गात् फुल्ल-क्षीब-कृशोल्लाघाः
५६ नुद-विदोन्द-त्रा-घ्रा-ह्रीभ्योऽन्यतरस्याम्
५७ न ध्या-ख्या-पॄ-मूर्च्छि-मदाम् ६१
५८ वित्तो भोग-प्रत्यययोः
५९ भित्तं शकलम्
६० ऋणमाधमर्ण्ये ( ३ )
६१ नसत्त-निषत्तानुत्त-प्रतूर्त-सूर्त-गूर्तानि छन्दसि
६२ क्विन्प्रत्ययस्य कुः ६३
६३ नशेर्वा
६४ मो नो धातोः ६५
६५ म्वोश्च
६६ स-सजुषो रुः ७१
६७ अवयाः श्वेतवाः पुरोडाश्च
६८ अहन् ६९
(वा०) रूप-रात्रि-रथन्तरेषु रुत्वं वाच्यम्
६९ रोऽसुपि ७१
७० अम्नरूधरवरित्युभयथा छन्दसि
७१ भुवश्च महाव्याहृतेः
७२ वसु-स्रंसु-ध्वंस्वनडुहां दः ७५
७३ तिप्यनस्तेः
७४ सिपि धातो रुर्वा ७५,७९,७५
७५ दश्च
७६ र्वोरुपधाया दीर्घ इकः ७९,७८,७९

---

४२ इतो निष्ठादेशप्रकरणम् ६१ सूत्रान्तं याति ।
६८ अहन् इत्यत्र सुपां सुलुक्० ७।१।३९ इति षष्ठ्या लुक् ज्ञेयम् ।

७७ **हलि** च ७८
७८ उपधायां च
७९ न भ-कुर्छुराम्
८० **अदसोऽसेर्दादु दो मः** ( ४ ) ८१
८१ एत ईद् बहुवचने
८२ **वाक्यस्य टेः** प्लुत उदात्तः ९८
८३ प्रत्यभिवादेऽशूद्रे
८४ **दूराद्धूते** च ८६
८५ हैं-हे-प्रयोगे हैं-हयोः
८६ गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्
८७ ओमभ्यादाने
८८ ये **यज्ञकर्मणि** ९२
८९ प्रणवष्टेः ९०
९० याज्यान्तः
९१ ब्रूहि-प्रेष्य-श्रौषड्-वौषडावहाना-**मादेः** ९२
९२ अग्नीत्प्रेषणे परस्य च
९३ **विभाषा** पृष्ट-प्रतिवचने हेः ९४
९४ निगृह्यानुयोगे च
९५ आम्रेडितं **भर्त्सने** ९६
९६ अङ्ग-युक्तं तिङाकाङ्क्षम्
९७ **विचार्यमाणानाम्** ९८
९८ पूर्वं तु भाषायाम्
९९ प्रति-श्रवणे च
१०० **अनुदात्तं** प्रश्नान्ताभि-पूजितयोः ( ५ ) १०२
१०१ चिदिति चोपमार्थे प्रयुज्यमाने
१०२ उपरिस्विदासीदिति च
१०३ **स्वरित**माम्रेडितेऽसूया-सम्मति-कोप-कुत्सनेषु १०५
१०४ क्षियाशीः-प्रैषेषु तिङाकाङ्क्षम्
१०५ अनन्त्यस्यापि प्रश्नाख्यानयोः
१०६ प्लुतावैच इदुतौ
१०७ एचोऽप्रगृह्यस्याद्दूराद्धूते पूर्वस्यार्धं-स्यादुत्तरस्येदुतौ
१०८ तयोर्-य्वावचि **संहितायाम्** ८।४।६८

[1]पूर्वत्रा[2]चि [3]षढोः[4]नसत्तैत[5] ईच्चि[6] दित्यष्टौ ॥

**इति पाणिनीयसूत्रपाठे अष्टमाध्यायस्य द्वितीयः पादः ।**



८० असेः इत्यत्र इकार उच्चारणार्थः । असः सकार-रहितस्येत्यर्थः । उ + ऊ = ऊ ततः 'उ' इति समाहारद्वन्द्वाद् ह्रस्वम् ।
अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥

१०८ 'संहितायाम्' इति अष्टमाध्यायान्तिमपादान्तम् 'अ अ ८।४।६८' इत्यन्तं गच्छति । इयं संहिता हलन्ताधिकारी । पूर्वोऽजन्ताधिकारीति । आवश्यके उभे अपि ।

## तृतीयः पादः

¹१ मतु-वसो रु संबुद्धौ छन्दसि १२
२ अत्रानुनासिकः पूर्वस्य तु वा ३
३ आतोऽटि नित्यम्
४ अनुनासिकात् परोऽनुस्वारः
५ समः सुटि
(वा०) सं-पुं-कानां सो वक्तव्यः, समो वा लोपमेके ।
६ पुमः खय्यम्परे ८
७ नश्छव्यप्रशान् १२,८
८ उभयथर्क्षु
९ दीर्घादटि समानपादे
१० नॄन् पे
११ स्वतवान् पायौ
१२ कानाम्रेडिते
१३ ढो ढे लोपः १४
१४ रो रि १५
१५ खरवसानयोर्विसर्जनीयः १६
१६ रोः सुपि १७
१७ भो-भगो-अघो-अपूर्वस्य योऽशि २२,२४
१८ व्-योर्लघुप्रयत्नतरः शाकटायनस्य २१
१९ लोपः शाकल्यस्य २२
२० ओतो गार्ग्यस्य (१)
२१ उञि च पदे
२२ हलि सर्वेषाम् २३
२३ मोऽनुस्वारः २४
२४ नश्चापदान्तस्य झलि
२५ मो राजि समः क्वौ २७
२६ हे मपरे वा २७,३१
२७ नपरे नः
२८ ङ्-णोः कुक् टुक् शरि ३०
२९ डः सि धुट् ३०
३० नश्च ३१
३१ शि तुक्
३२ ङमो ह्रस्वादचि ङमुण् नित्यम् ३३
३३ मय उञो वो वा
३४ विसर्जनीयस्य सः ५४
३५ शर्परे विसर्जनीयः ३६
३६ वा शरि
(वा०) खर्परे शरि वा विसर्गलोपः
३७ कु-प्वोः ≍क ≍पौ च ५४
३८ सोऽपदादौ ५४,३९
३९ इणः षः ४८
४० नमस्-पुरसोर्गत्योः (२)
४१ इदुदुपधस्य चाप्रत्ययस्य
४२ तिरसोऽन्यतरस्याम् ४४

---

१ रुप्रकरणं १२ सूत्रान्तम् ।
७ 'अप्रशान्' इति प्रशान् शब्दस्य 'सुपां सुलुक्० ७।१।३९' इति षष्ठ्याः सौ कृते रूपम् ।
१३ क्रमोपवन्धेऽप्यथ लाघवे मुने रो रीति सूत्रं पुरतः प्रकाशते ।

समाजशास्त्रावगतिद्विजत्ववित् प्रशीलनं कर्तुमुपागतो बुधः ॥
३४ इतः 'इडाया वा ८।३।५४' इत्यन्तं सत्वाधिकारः ।

४३ द्विस्त्रिश्चतुरिति कृत्वोऽर्थे
४४ **इसुसोः** सामर्थ्ये ४५
४५ नित्यं **समासेऽनुत्तरपदस्थस्य** ५४,४७
४६ अत⁀कृ-कमि-कंस-कुम्भ-पात्र-कुशा-कर्णीष्वनव्ययस्य
४७ अधः-शिरसी पदे
४८ कस्कादिषु च
४९ **छन्दसि** वाऽप्राम्रेडितयोः ५४
५० कः करत्-करति-कृधि-कृतेष्वनदितेः
५१ **पञ्चम्याः** परावध्यर्थे ५२
५२ पातौ च बहुलम्
५३ **षष्ठ्याः पति-पुत्र-पृष्ठ-पार-पद-पयस्-पोषेषु** ५४
५४ इडाया वा
५५ **अपदान्तस्य मूर्धन्यः** ११९
५६ सहेः साडः **सः** ११९
५७ **इण् कोः** ११९
५८ **नुम्-विसर्जनीय-शर्व्यवायेऽपि** ५९
५९ आदेश-प्रत्यययोः
६० शासि-वसि-घसीनां च ( ३ )
६१ स्तौति-ण्योरेव **षण्यभ्यासात्** ६२
६२ सः स्विदि-स्वदि-सहीनां च
६३ प्राक् सिता**दड्व्यवायेऽपि** ७०
६४ स्थादिष्वभ्यासेन **चाभ्यासस्य** ६५
६५ **उपसर्गात्** सुनोति-सुवति-स्यति-स्तौति-स्तोभति-स्था-सेनय-सेध-सिच-सञ्ज-स्वञ्जाम् ७७
६६ सदिरप्रतेः
६७ **स्तन्भेः** ६८
६८ **अवा**च्चालम्बनाविदूर्ययोः ६९
६९ वेश्च स्वनो भोजने
७० **परि-नि-विभ्यः** सेव-सित-सय सिवु-सह-सुट्-स्तु-स्वञ्जाम् ७१
७१ सिवादीनां **वा**ऽड्व्यवायेऽपि ७६
७२ अनु-वि-पर्यभि-निभ्यः स्यन्दतेरप्राणिषु
७३ वेः **स्कन्दे**रनिष्ठायाम् ७५
७४ परेश्च
७५ परिस्कन्दः प्राच्यभरतेषु
७६ स्फुरति-स्फुलत्योर्नि-र्नि-विभ्यः
७७ वेः स्कभ्नातेर्नित्यम्
७८ **इणः षी-ध्वं-लुङ्-लिटां धोऽङ्गात्** ७९

---

५४ पदाङ्ग-संहिता-धातु-प्रत्ययाधिकृतिप्रभा ।
अष्टकक्रम-पाठेनाध्येतुः प्रज्ञां प्रकाशयेत् ॥
५५ षत्व-णत्वाधिकारोऽयम् भट्टिशास्त्रे विमृश्यताम् ।
नवमे बन्धनं गत्वा कपी रावणमब्रवीत् ॥
५५ इतो मूर्धन्यषाधिकारः सनिषेधः पादान्तं ज्ञेयः ।
६३ इतः सप्ततितम-सूत्रान्तं प्राक् सितादिः ।
६५ इतः सप्त-सप्ततितमान्तम् उपसर्गात् षत्वविधिः ।
७० स्थासेनयादिः सितात् पूर्वः ।

७९ विभाषेटः
८० **समासे**ऽङ्गुलेः सङ्गः ( ४ ) ८५
८१ भीरोः स्थानम्
८२ अग्नेः स्तुत्-स्तोम-सोमाः
८३ ज्योतिरायुषः स्तोमः
८४ मातृ-पितृभ्यां **स्वसा** ८५
८५ मातुः पितुर्भ्या**मन्यतरस्याम्** ८६
८६ अभि-निसः स्तनः शब्दसंज्ञायाम्
८७ उपसर्ग-प्रादुर्भ्यामस्तिर्यच्परः
८८ सु-वि-नि-र्दुर्भ्यः सुपि-सूति-समाः
८९ नि-नदीभ्यां स्नातेः कौशले
९० सूत्रं प्रतिष्णातम्
९१ कपिष्ठलो गोत्रे
९२ प्रष्ठोऽग्रगामिनि
९३ वृक्षासनयो**र्विष्टरः** ९४
९४ छन्दोनाम्नि च
९५ गवि-युधिभ्यां स्थिरः
९६ वि-कु-शमि-परिभ्यः स्थलम्
९७ अम्बाम्ब-गो-भूमि सव्याऽप-द्वि-त्रि-कु-शेकु-शङ्क्वङ्गु-मञ्जि-पुञ्जि-परमे-बर्हिर्दिव्यग्निभ्यः स्थः
९८ सुषामादिषु च
९९ **एति संज्ञायामगात्** १००
१०० नक्षत्राद् वा ( ५ )
१०१ ह्रस्वात् **तादौ** तद्धिते १०४
१०२ निसस्तपतावनासेवने
१०३ **युष्मत्-तत्-ततक्षुः**ष्वन्तः-पादम् १०४
१०४ यजुष्येकेषाम् १०६
१०५ स्तुत-स्तोमयोश्**छन्दसि** १०९
१०६ **पूर्वपदात्** १०९
१०७ सुञः
१०८ सनोतेरनः
१०९ सहेः पृतनर्ताभ्यां च
११० **न** रपर-सृपि-सृजि-स्पृशि-स्पृहि-सवनादीनाम् ११९
१११ सात् पदाद्योः
११२ सिचो यङि
११३ सेधतेर्गतौ
११४ प्रतिस्तब्ध-निस्तब्धौ
११५ सोढः
११६ स्तम्भु-सिवु-सहां चङि
११७ सुनोतेः स्य-सनोः
११८ सदि-ष्वञ्जोः परस्य लिटि
११९ नि-व्यभिभ्योऽड्व्यवाये वा छन्दसि

[1]मतुवसोरु [2]ञि चेदु [3]दुपधस्य [4]स्तौतिण्यो [5]भीरोः [6]ह्रस्वात्तादावेकोनविंशतिः १९ ॥

इति पाणिनीयसूत्रपाठे अष्टमाध्यायस्य तृतीयः पादः ।

## चतुर्थः पादः

१ **र-षाभ्यां नो णः समानपदे** ३९ [1]
(वा०) ऋवर्णाच्चेति वक्तव्यम्
२ अट्-कु-प्वाङ्-नुम्-व्यवायेऽपि
३ **पूर्वपदात् संज्ञायामगः** १३,४



१ णत्वाधिकारः क्षुभ्नादिषु च ३९ इत्यन्तं याति । भट्टिकाव्यशास्त्रे नवमसर्गे णत्वच्छटा दृशेलिमा, सत्वषत्वयोश्च ।

४ **वनं** पुरगा-मिश्रका-सिध्रका-शारिका-कोटरा-ऽग्रेभ्यः ६
५ प्र-निरन्तः-शरेक्षु-प्लक्षाम्र-कार्ष्य-खदिर-पीयूक्षाभ्योऽसंज्ञायामपि
६ विभाषौषधि-वनस्पतिभ्यः
७ अह्नोऽदन्तात्
८ वाहनमाहितात्
९ **पानं** देशे १०
१० **वा** भाव-करणयोः ११
११ **प्रातिपदिकान्त-नुम्-विभक्तिषु** च १३
१२ एकाजुत्तरपदे णः
१३ कुमति च
१४ **उपसर्गाद**समासेऽपि णोपदेशस्य २३
१५ हिनु-मीना
१६ आनि लोट्
१७ **नेर्गद**-नद-पत-पद-घु-मा-स्यति-हन्ति-याति-वाति-द्राति-प्साति-वपति-वहति-शाम्यति-चिनोति-देग्धिषु च १८
१८ शेषे विभाषाऽक-खादावषान्त उपदेशे
१९ **अनितेः** २१
२० अन्तः (१)
२१ उभौ साभ्यासस्य
२२ **हन्तेरत्पूर्वस्य** २३
२३ व-मोर्वा
२४ **अन्तरदेशे** २५
२५ अयनं च
२६ **छन्दस्यृदवग्रहात्** २७
२७ **नश्च** धातुस्थोरु-षुभ्यः २८
२८ **उपसर्गाद्** बहुलम् ३४
२९ **कृत्यचः** ३४,३१
३० **णेर्विभाषा** ३१
३१ **हलश्चेजुपधात्** ३२
३२ इजादेः सनुमः
३३ वा निंस-निक्ष-निन्दाम्
३४ **न** भा-भू-पू-कमि-गमि-प्यायी-वेपाम् ३९
३५ षात्पदान्तात्
३६ नशेः षान्तस्य
३७ पदान्तस्य
३८ पदव्यवायेऽपि
३९ क्षुभ्नादिषु च
(वा०) आचार्यादणत्वं च
४० **स्तोः श्चुना श्चुः** (२) ४२,४४
४१ **ष्टुना ष्टुः** ४४
४२ **न** पदान्ताट्टोरनाम् ४५
४३ **तोः** षि ४४
४४ शात्
४५ **यरोऽनुनासिकेऽनुनासिको वा** ४७
(वा०) प्रत्यये भाषायां नित्यम्
४६ **अचो रहाभ्यां द्वे** ४७,५२
४७ अनचि च

---

२८ इतः उपसर्गादिति ३४ सूत्रान्तम् ।
३४ नाधिकारः ३९ सूत्रान्तम् ।
४६ वर्णद्वित्वं दीर्घादाचार्याणाम् ५२ सूत्रान्तम् । तत्र संधिः ।

४८ **नादिन्याक्रोशे पुत्रस्य** ५२
४९ शरोऽचि
५० त्रि-प्रभृतिषु शाकटायनस्य
५१ सर्वत्र शाकल्यस्य
५२ दीर्घादाचार्याणाम्
५३ **झलां** जश् झशि ५६
५४ अभ्यासे **चर्च** ५६
५५ खरि च
५६ **वाऽवसाने** ५७
५७ अणोऽप्रगृह्यस्यानुनासिकः
५८ **अनुस्वारस्य ययि पर-सवर्णः** ५९,६५
५९ वा पदान्तस्य
६० तोर्लि (३)
६१ उदः स्था-स्तम्भोः **पूर्वस्य** ६२
६२ **झयो** होऽन्यतरस्याम् ६३,६५
६३ शश्छोऽटि
(वा०) छत्वममीति वाच्यम्
६४ **हलो** यमां यमि **लोपः** ६५
६५ झरो झरि सवर्णे
६६ उदात्तादनुदात्तस्य स्वरितः ६७
६७ नोदात्त-स्वरितोदयमगार्ग्य-काश्यप-गालवानाम्
६८ अ अ
[1]रषाभ्या [2]मुभौ [3]ष्टुना ष्टुरु[4]
दः स्थाष्टौ ८ ॥

**इति पाणिनीयसूत्रपाठे अष्टमाध्यायस्य चतुर्थः पादः अध्यायश्च ।**

---

*** वाच्या न सा पाणिनिकाव्य-शक्तिस्तदीय-काव्यं पठता जनेन ।**
**अतद्धिते यो ध्वनि-गर्भ-सूत्रे श्वानं युवानं मघवानमाह ॥**

---

६८ 'अ अ' इति अनुत्तर-नामकीर्तनान्महामङ्गलम् । तदेवं 'वृद्धिः' इत्यादौ, शिवशमिति मध्येऽन्ते चेदम्—इति 'मङ्गलादीनि०' इत्यादि पतञ्जल्युक्तिः ( महाभा० ३–१ ) ।

६८ त्रिमुन्यष्टकमध्येता भट्टिशास्त्रसमन्वितम् ।
त्रिमङ्गलं श्रुतिप्रख्यं नीतिशास्त्रसमाजवित् ॥

* तस्य हितं तद्धितं, न तद्धितम् अतद्धितम्, तस्मिन् अतद्धिते=स्व-हिताऽकरणे श्वानं युवानं मघवानम् आह प्रयुङ्क्ते । न इमे स्वहितकर्तारः । 'श्वयुव-मघोनाम् अतद्धिते' ( ६।४।१३३ ) प्रवृत्तिः इति पाणिनिः ध्वनयत्यनेन सूत्रेणेति भावः ।

# पाणिनीय-शिक्षा-सूत्रपाठः

इहान्ते पाणिनीय-शिक्षासूत्र-पाठः प्रकाश्यते । अन्यकृत-श्लोकात्मक-शिक्षापेक्षयाऽस्य सुस्फुटत्वात् प्रामाणिकत्वाच्च । तैत्तिरीय-प्रातिशाख्यस्य त्रिरत्न-भाष्यकर्त्रा सोमयाजिना—

'सन्ध्यक्षराणां ह्रस्वा न सन्ति' इति पाणिनीयेऽपि—इत्येवं तस्य पाणिन्युपज्ञत्वं समर्थितं ( मैसूर संस्करण पृ० ४५० ) श्रीयुधिष्ठिरमीमांसकादिभिरैतिहासिकैश्च तस्य प्रामाणिकत्वमुद्घोषितम् ।

( १ ) आकाश-वायु-प्रभवः शरीरात् समुच्चरन् वक्त्रमुपैति नादः ।
स्थानान्तरेषु प्रविभज्यमानो वर्णत्वमागच्छति यः स शब्दः ॥

( २ ) तमक्षरं ब्रह्म परं पवित्रं गुहाशयं सम्यगुशन्ति विप्राः ।
स श्रेयसा चाभ्युदयेन चैव सम्यक् प्रयुक्तः पुरुषं युनक्ति ॥

( ३ ) [ वर्णास् ] त्रिषष्टिः ६३ ।

( ४ ) स्थानमिदं करणमिदं प्रयत्न एष द्विधाऽनिलः ।
स्थानं पीडयति, वृत्तिकारः प्रक्रम एषोऽथ नाभितलात् ॥

## ( १ ) स्थान-प्रकरणम्

१ अकुहविसर्जनीयाः कण्ठ्याः ।
२ हविसर्जनीयावुरस्यावेकेषाम् ।
३ जिह्वामूलीयो जिह्व्यः ।
४ कवर्गं ऋवर्णश्च जिह्व्यः ।
५ सर्वमुखस्थानमवर्णमित्येके ।
६ कण्ठ्यानास्यमात्रानित्येके ।
७ इचुयशास्तालव्याः ।
८ ऋटुरषा मूर्धन्याः ।
९ रेफो दन्तमूलीय एकेषाम् ।
१० दन्तमूलस्तु तवर्गः ।
११ लृतुलसा दन्त्याः ।
१२ वकारो दन्त्योष्ठ्यः ।
१३ सृक्विणीस्थानमेकेषाम् ।
१४ उपूपध्मानीया ओष्ठ्याः ।
१५ अनुस्वारयमा नासिक्याः ।
१६ कण्ठ्यनासिक्यमनुस्वारमेके ।
१७ यमाश्च नासिक्यजिह्वामूलीया एकेषाम् ।

---

( १ ) टिप्पणी—पाणिनीय-शिक्षासूत्रकी उपलब्धिका इतिहास रामलाल कपूर ट्रस्ट, बहालगढ़ सोनीपत ( हरियाणा ) से प्रकाशित अष्टाध्यायी सूत्र-पाठके १४८ पृष्ठ में देखें ।

१६ अनुस्वारो वेदे ॅ ( ग्वं ) इत्युच्यते रेफ-शल्-प्रत्याहारयोः परयोः ।

१८ एदैतौ कण्ठ्यतालव्यौ ।
१९ ओदौतौ कण्ठ्योष्ठ्यौ ।
२० ङञणनमाः स्वस्थाननासिकास्थानाः ।
२१ द्वौ द्वौ वर्णौ सन्ध्यक्षराणामारम्भके भवत इति ।
२२ नहि सरेफ-ऋवर्ण-उच्चारणे रेफश्रुतिः ।

## ( २ ) करण-प्रकरणम्

१ जिह्व्यतालव्यमूर्धन्यदन्त्यानां जिह्वा करणम् ।
२ जिह्वामूलेन जिह्व्यानाम् ।
३ जिह्वामध्येन तालव्यानाम् ।
४ जिह्वोपाग्रेण मूर्धन्यानाम् ।
५ जिह्वाग्राधः करणं वा ।
६ जिह्वाग्रेण दन्त्यानाम् ।
७ इत्येतदन्तःकरणम् ।

## ( ३ ) अन्तःप्रयत्न-प्रकरणम्

१ प्रयत्नोऽपि द्विविधः ।
२ आभ्यन्तरो बाह्यश्च ।
३ आभ्यन्तरस्तावत् ।
४ स्पृष्टकरणाः स्पर्शाः ।
५ ईषत्स्पृष्टकरणा अन्तःस्थाः ।
६ ईषद्विवृतकरणा ऊष्माणः ।
७ विवृतकरणा वा ।
८ विवृतकरणाः स्वराः ।
९ संवृतस्त्वकारः ।
१० इत्येषोऽन्तः-प्रयत्नः ।

## ( ४ ) बाह्यप्रयत्न-प्रकरणम्

१ अथ बाह्याः प्रयत्नाः ।
२ वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीयजिह्वामूलीयोपध्मानीया यमौ च प्रथम-द्वितीयौ विवृतकण्ठाः श्वासानुप्रदानाश्चाघोषाः ।
३ एके अल्पप्राणा इतरे महाप्राणाः ।
४ वर्गाणां तृतीयचतुर्थां अन्तस्था हकारानुस्वारौ यमौ च तृतीय-चतुर्थौ नासिक्याश्च संवृतकण्ठा नादानुप्रदाना घोषवन्तश्च ।
५ [ एकेऽन्तःस्थाश्चाल्पप्राणा इतरे सर्वे महाप्राणाः ] ।
६ तथा तृतीयास्तथा पञ्चमाः ।
७ आनुनासिक्यमेषामधिको गुणः ।
८ शादय ऊष्माणः ।
९ [ स ] स्थानेन द्वितीय-तृतीय-चतुर्थाः ।
१० हकारेण चतुर्थाः ।

## ( ५ ) स्थानपीडन-प्रकरणम्

१ तत्र स्पर्शयमवर्णकरो वायुरयःपिण्डवत् स्थानमभिपीडयति ।
२ अन्तःस्थवर्णकरो वायुर्दारुपिण्डवत् ।
३ ऊष्मस्वरवर्णकरो वायुरूर्णापिण्डवत् ।
४ उक्ताः स्थानकरणप्रयत्नाः ।

## ( ६ ) वृत्तिकार-प्रकरणम्

१ अवर्णो ह्रस्वदीर्घप्लुतत्वाच्च त्रै-स्वर्योपनयेन चानुनासिक्यभेदाच्च संख्यातोऽष्टादशात्मकः ।
२ एवमिवर्णादयः ।
३ लृवर्णस्य दीर्घा न सन्ति ।
४ तं द्वादशभेदमाचक्षते ।
५ यदृच्छाशब्देऽशक्तिजानुकरणे वा यदा दीर्घाः स्युस्तदाऽष्टादशभेदं ब्रुवते क्लृपक इत्यादिषु ।
६ सन्ध्यक्षराणां ह्रस्वा न सन्ति ।
७ तान्यपि द्वादशप्रभेदानि ।
८ अन्तःस्था द्विप्रभेदा रेफवर्जिताः सानुनासिका निरनुनासिकाश्च ।
९ रेफोष्मणां सवर्णा न सन्ति ।
१० वर्ग्यो वर्ग्येण सवर्णः ।

## ( ७ ) प्रक्रम-प्रकरणम्

१ एष क्रमो वर्णानाम् ।
२ तत्रैते कौशिकीयाः श्लोकाः ।
३ सर्वान्तेऽयोगवाहत्वाद्
विसर्गादिरिहाष्टकः ।
अकार उच्चारणार्थो
व्यञ्जनेष्वनुवध्यते ॥
४ ⌣क⌣पयोः कपकारौ च
तद्वर्गीयाश्रयत्वतः ।
पलिक्क्नी-चख्ख्नतुर्जग्मि-
र्जघ्घ्नुरित्यत्र यद्वपुः ॥
५ …नासिक्येनोक्तं कादीनां त इमे यमाः । तेषामुकारः संस्थान-तत्तद्वर्गीयलक्षकः ॥
६ उक्ताः स्थानकरणप्रयत्नाः ।
७ इह यत्र स्थाने वर्णा उपलभ्यन्ते तत् स्थानम् ।
८ येन निर्वृत्यन्ते तत् करणम् ।
९ प्रयतनं प्रयत्नः ।

## ( ८ ) नाभितल-प्रकरणम्

१ तत्र नाभिप्रदेशात् प्रयत्नप्रेरितः प्राणो नाम वायुरूर्ध्वमाक्रामन्नुर-आदीनां स्थानानामन्यतमस्मिन् स्थाने प्रयत्नेन विधार्यते । [ इति अग्रे ग्रन्थपातः ]

उच्चारणात् पूर्वं वर्णानामाभ्यन्तरं तदनन्तरं बाह्यं प्रयतनं ज्ञेयम् । प्राक्तने काले भाषासंस्कृतेऽपि उदात्तादिस्वरप्रयोगो भवति स्म । अग्रेऽपि परिशिष्टकारिका दृशेलिमाः ।

**पाणिनीयो नयो दुर्लभः साम्प्रतं तस्य वक्ताप्यहो भाग्यतो लभ्यते ।**
**तद्दिशा शब्दराशिः समः साध्यते लोक-वेदेषु यो विस्तृतो विद्यते ॥ १ ॥**

**[ इति पाणिनीयशिक्षासूत्राणां मूलपाठः । ]**

# परिशिष्ट-कारिकाः

हलः सेट्-सिचि वृद्धिर्नातो हलादेर्लघोस्तु वा ।
स्याल्लृरान्तस्य वदि-व्रज्योर्न श्वसक्षणह्मचेदिति ॥
रधि-नशि-तृपि-दृपि-द्रुहि-ष्णुहि-मुहि-ष्णिहः ।
रधादयोऽमी पठिता दिवादिष्वष्ट कृष्टिभिः ॥
मुञ्चतिर्लुम्पतिश्चैव विदिर्लिम्पतिरेव च ।
सिचिः कृतिः खिदिश्चैव पिशिश्चाष्टौ मुचादयः ॥
एकाजुर्णुनूदन्ता ये दीधी-वेव्योश्च जीर्यतेः ।
जागर्तेश्च दरिद्रातेर्नानुनासः प्रयुज्यते ॥
रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा ।
जक्षितिश्चेति विज्ञेयो रुदादिः पञ्चको गणः ॥
जक्ष-जागृ-दरिद्रा-शास् दीधी-वेवी-चकास् तथा ।
अभ्यस्तसंज्ञाः सप्तैते साभ्यासा ये च धातवः ॥
यजिर्वपिर्वहिश्चैव व्येञ्-वेञौ श्वयतिस्तथा ।
वद-वसौ ह्वयतिश्चैव स्मृता नव यजादयः ॥
लुम्पेदवश्यमः कृत्ये तुं-काममनसोरपि ।
समो वा हित-ततयोर्मांसस्य पचि युड्-घञोः ॥
यस्य षष्ठी चतुर्थी स्याद् विहस्य च विहाय च ।
अहं कथं द्वितीया स्याद् द्वितीया स्यामहं कथम् ॥
षट्-पदानीह सूत्राणि पाणिन्यष्टकमध्यतः ।
मन्त्रवत्सम्प्रयोज्यानि सदा वृश्चिकदंशने ॥

कृतं कालिदासेन समाधानम्—पिशाचोक्तेः—(१)

एको गोत्रे स भवति पुमान् यः कुटुम्बं बिभर्ति,
स्त्री पुंवच्च प्रभवति यदा तद्धि गेहं विनश्येत् ।
वृद्धो यूनाऽभ्युदयमनसा सर्वथा सेवनीयः,
सर्वस्य द्वे सुमति-कुमती सम्पदापत्तिहेतू ॥
पक्षि-मत्स्य मृगान् हन्ति परिपन्थं च तिष्ठति ।
व्रातेन जीवत्यधुना न वशः पूर्ववत् सनः ॥
कीदृग्धीरः पदं ब्रूते, को रोगी, कश्च नास्तिकः ।
कीदृक् चन्द्रं न पश्यन्ति, तत् सूत्रं पाणिनेर्वद ॥

---

(१) पिशाचप्रश्नसूत्राणि क्रमशः—४।१।९२,१।२।६६,६।२।८।१।१

अनिट्कारिकाः—

**अनिट् स्वरान्तो भवतीति दृश्यतामिमे तु सेटः कथिता महर्षिभिः ।**
**ऊदन्त-ॠदन्त-ऋताञ्च वृङ् वृञौ श्वि-डीङिवर्णेष्वथ शीङ्श्रिञावपि ॥**
**गणस्थ ऊदन्त उताञ्च रु-ष्णुवौ क्षुविस्तथोर्णोतिरथो यु-णु-क्ष्णवः ।**
**इति स्वरान्ता निपुणैः समीरितास्ततो हलन्ता अपि सन्निरूपिताः ॥**

अन्यच्च—

**ऊद्-ॠदन्तैर्यौति-रु-क्ष्णु-शीङ्-स्नु-नु-क्षु-श्वि-डीङ्-श्रिभिः ।**
**वृङ्-वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥**
( द्र० काशिका 'एकाच उपदेशेऽनुदात्तात् ७।२।१०' )

## शिक्षायामनुबन्ध-विचारः

**धातुप्रत्ययगाः सर्वे सार्थका ये प्रकीर्तिताः ।**
**अनुबन्धाः प्रदर्श्यन्ते मनागध्यायिनां कृते ॥**

आत्मनेपदिनामकारः **अनुदात्तङित आत्मनेपदम्** १।३।१२ इत्यात्मनेपदार्थः । ( परस्मैपदिनान्तूच्चारणार्थः ) । उभयपदिनामकारः **स्वरितञितः कर्त्रभिप्राये क्रियाफले** १।३।७२ इति उभयपद्यर्थः । आकारः **आदितश्च** ७।२।१६ इति इण्निषेधार्थः । इकारः **इदितो नुम् धातोः** ७।१।५८ इति विशेषणार्थः । ईकारः **श्वीदितो निष्ठायाम्** ७।२।१४ इति विशेषणार्थः । उकारः **उदितो वा** ७।२।५६ इति विशेषणार्थः । ऊकारः **स्वरति-सूति-सूयति-धूञूदितो वा** ७।२।४४ इति विशेषणार्थः । ऋकारः **नाग्लोपिशास्वृदिताम्** ७।४।२ इति विशेषणार्थः । लृकारः **पुषादिद्युताद्य्लृदितः परस्मैपदेषु** ३।१।५ इति विशेषणार्थः । एकारः **ह्म्यन्त-क्षण-श्वस-जागृ-णि-श्व्येदिताम्** ७।२।५ इति विशेषणार्थः । ओकारः **ओदितश्च** ८।२।४५ इति विशेषणार्थः । 'इक् स्मरणे' इत्यत्र ककारः **अधीगर्थ-दयेशां कर्मणि** २।३।५२ इति विशेषणार्थः । ङकारः **अनुदात्तङित आत्मनेपदम्** १।३।१२ इत्यात्मनेपदार्थः । ञकारः **स्वरित-ञितः कर्त्रभिप्राये क्रियाफले** १।३।७२ इति विशेषणार्थः । षकारः **षिद्भिदादिभ्योऽङ्** ३।३।१०४ इति विशेषणार्थः । टकारः **पाघ्राध्माधेट्दृशः शः** ३।१।१३७ इति विशेषणार्थः । इणो दाणो णकारः **दाणश्च सा चेच्चतुर्थ्यर्थे** १।३।५५ इति विशेषणार्थः । इणो णकारः **इणो गा लुङि** २।४।४५ इति विशेषणार्थः । दाप् दैपोः पकारः **दा-धा-घ्वदाप्** १।१।२० इति विशेषणार्थः । टु-शब्दः **ट्वितोऽथुच्** ३।३।८९ इत्यर्थः । डु शब्दः **ड्वितः क्त्रिः** ३।३।८८ इत्यर्थः । ञि-शब्दः **ञीतः क्तः** ३।२।१८७ इत्यर्थः । इर्शब्दः **इरितो वा** ३।१।५७ इत्यर्थः । अथ क्रियावाचिभ्यो धातुभ्यो

लः स्थाने तिङ्प्रत्ययाः भवन्ति। ते च यथा—**तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्** ३।४।७८ इत्यष्टादश। **विभक्तिश्च** १।४।१०४ इति **सुपः** १।४।१०३ **तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः** १।४।१०१ इति च प्रथममध्यमोत्तमा विभक्तयोऽपि कथ्यन्ते। अत्र पकारादयः सर्वेप्यनुबन्धाः कार्य्यार्थाः। तथाहि—पकारः **अनुदात्तौ सुप्पितौ** ३।१।४ इति विशेषणार्थः। टकारः **इटोऽत्** ३।४।१०६ इति विशेषणार्थः। ङकारः तिङ्प्रत्याहारार्थः। पूर्वे नव परस्मैपदं, परे नवात्मनेपदम्। **तङानावात्मनेपदम्** १।४।१०० इति तङ आत्मनेपदसंज्ञायाम्, अवशिष्टानां नवानां **लः परस्मैपदम्** १।४।९९ इति परस्मैपदम् ( अप्रकल्प्य चापवादविषयम् उत्सर्गोऽभिनिविशते ) इति न्यायात्। लट् लिट् लुट् लृट् लेट् लोट् इति षट् टितः। लङ् लिङ् लुङ् लृङ् चत्वारो ङितः। अत्राप्यनुबन्धा अकारादयः कार्यार्थाः। **विदो लटो वा** ३।४।८३ **लिटः कानज्वा** ३।२।१०६ **लुटः प्रथमस्य डारौरसः** २।४।८५ **लृट् शेषे च** ३।३।१३ **लेटोऽडाटौ** ३।४।९४ **लोटो लङ्वत्** ३।४।८५। एषु अकारादयश्चरितार्थाः। टकाराः **टित आत्मनेपदानां टेरे** ३।४।७९ इत्यर्थाः। **लङः शाकटायनस्यैव** ३।४।१११ **लिङः सीयुट्** ३।४।१०२ **च्लि लुङि** ३।१।४३ **स्यतासी लृलुटोः** ३।१।३३। एषु अपि अकारादयश्चरितार्थाः। ङकाराः **नित्यं ङितः** ३।४।९९ इत्यर्थाः। लकारा धातुभ्यो विधीयन्ते। ते च धातवो गणस्थाः प्रत्ययान्ताश्चेति द्विविधाः। गणस्थाः प्रायः सहस्रद्वयसंख्यकाः २०००। सौत्राः प्रत्ययान्ताश्चेति अनन्ताः। **भूवादयो धातवः** १।३।१ **सनाद्यन्ता धातवः** ३।१।३२ तेऽपि सकर्मकाकर्मकभेदेन द्विधा। सकर्मकाः कर्मापेक्षक्रियार्थकाः। अकर्मकाः कर्मनिरपेक्षक्रियार्थकाः। तेभ्यश्च **लः कर्मणि च भावे चाकर्मकेभ्यः** ३।४।६९ ( अकर्मकेभ्यो धातुभ्यो भावे कर्त्तरि सकर्मकेभ्यः कर्मणि कर्त्तरि च लो भवति ) इति लकारविधिसूत्रम्। इमे च विकरणप्रत्ययभेदतोऽपि दशधा। तथाहि—**कर्त्तरि शप्** ३।१।६८, **अदिप्रभृतिभ्यः शपः** २।४।७२, **जुहोत्यादिभ्यः श्लुः** २।४।७५, **दिवादिभ्यः श्यन्** ३।१।६९, **स्वादिभ्यः श्नुः** ३।१।७३, **तुदादिभ्यः शः** ३।१।७७, **रुधादिभ्यः श्नम्** ३।१।७८, **तनादिकृञ्भ्य उः** ३।१।७९, **क्र्यादिभ्यः श्ना** ३।१।८१, **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** ३।१।२५। तत्र सर्वेऽपि यथायोग्यं परस्मैपदात्मनेपदोभयपदभेदेन त्रिधा भवन्तोऽपि लक्षणान्तरभेदेन परस्परं परिवर्त्तन्ते उपसर्गादियोगात्। सकर्मकादिभेदोऽपि विपरिवर्तते। यथा भवति, अनुभवति इत्यादि। विशति, निविशते इत्यादि चेति सङ्क्षेपः।

# अष्टाध्यायीसूत्राणां सूची


अ अ ८।४।६८
अंशंहारी ५।२।६९
अकः सवर्णे दीर्घः ६।१।१०१
अकथितं च १।४।५१
अकर्तरि च० ३।३ १९
अकर्तर्यृणे पञ्चमी २।३।२४
अकर्मकाच्च १।३।२६
अकर्मकाच्च १।३।३५
अकर्मकाच्च १।३।४५
अकर्मधारये ६।२।१३०
अकृच्छ्रे प्रियसुख० ८।१।१३
अकृत्सार्वधातु० ७।४।२५
अके जीविकार्थे ६।२।७३
अकेनोर्भविष्य० २।३।७०
अक्षशलाका० २।१।१०
अक्षेषु ग्लहः ३।३।७०
अक्षोऽन्यतरस्याम् ३।१।७५
अक्ष्णोऽदर्शनात् ५।४।७६
अगारान्ताट्ठन् ४।४।७०
अगारैकदेशे ३।३।७९
अग्नीत्प्रेषणे ८।२।९२
अग्नेः स्तुत्स्तोम० ८।३।८२
अग्नेर्ढक् ४।२।३३
अग्नौ चेः ३।२।९१
अग्नौ परि० ३।१।१३१
अग्राख्यायामुरसः ५।४।९३
अग्राद्यत् ४।४।११६
अग्रान्तशुद्ध० ५।४।१४५
अङ्गितश्च ६।४।१०३
अङ्ग इत्यादौ च ६।१।११९
अङ्गयुक्तं तिङ् ८।२।९६
अङ्गस्य ६।४।१
अङ्गानि मैरेये ६।२।७०
अङ्गात् प्रातिलोम्ये ८।१।३३
अङ्गुलेर्दारुणि ५।४।११४
अङ्गुल्यादि० ५।३।१०८
अ च ४।३।३१
अच उपसर्गात्तः ७।४।४७
अचः ६।४।१३८
अचः कर्तृयकि ६।१।१९५
अचः कर्मकर्तरि ३।१।६२
अचः परस्मिन्० १।१।५७
अचतुरविचतुर० ५।४।७७
अचश्च १।२।२८
अचस्तास्वत्थल्य ७।२।६१
अचित्तहस्तिधेनो० ४।२।४७
अचित्ताददेश० ४।३।९६
अचि र ऋतः ७।२।१००
अचि विभाषा ८।२।२१
अचि श्नुधातु० ६।४।७७
अचोऽञ्णिति ७।२।११५
अचोऽन्त्यादि टि १।१।६४
अचो यत् ३।१।९७
अचो रहाभ्यां द्वे ८।४।४६
अच्कावशक्तौ ६।२।१५७
अच्च घेः ७।३।११९
अच्छ गत्यर्थवदेषु १।४।६९
अच्प्रत्यन्वव० ५।४।७५
अजर्यं संगतम् ३।१।१०५
अजादी गुण० ५।३।५८
अजादेर्द्वितीयस्य ६।१।२
अजाद्यतष्टाप् ४।१।४
अजाद्यदन्तम् २।२।३३
अजाविभ्यां थ्यन् ५।१।८
अजिनान्तस्योत्तर ५।३।८२
अजिव्रज्योश्च ७।३।६०
अजेर्व्यघञपोः २।४।५६
अज्झनगमां सनि ६।४।१६
अज्ञाते ५।३।७३
अञ्चेः पूजायाम् ७।२।५३
अञ्चेर्लुक् ५।३।३०
अञ्चेश्छन्दस्य० ६।१।१७०
अञ्चोऽनपादाने ८।२।४८
अञ्जेः सिचि ७।२।७१
अञ्नासिकायाः ५।४।११८
अट्कुप्वाङ्० ८।४।२
अड् गार्ग्य० ७।३।९९
अणञौ च ४।३।३३
अणावकर्म० १।३।८८
अणिञोरनार्ष० ४।१।७८
अणि नियुक्ते ६।२।७५
अणिनुणः ५।४।१५
अणुदित्सवर्णस्य० १।१।६९
अणृगयनादिभ्यः ४।३।७३
अणो द्व्यचः ४।१।१५६
अणोऽप्रगृह्य० ८।४।५७
अण्कर्मणि च ३।३।१२
अण्कुटिलिकायाः ४।४।१८
अण्च ५।२।१०३
अण्महिष्यादिभ्यः ४।४।४८
अत आदेः ७।४।७०
अत इञ् ४।१।९५
अत इनिठनौ ५।२।११५

